सदेति । प्राणादीनामसत्त्वे सत्त्वेन कथं व्यवहारगोचरत्वमित्याशङ्क्य तृतीयपादार्थमाह—ते चेति । कल्पितानां प्राणादिभावानामधिष्ठानसत्तया सत्त्वेन[1] न सत्ताऽवकल्प्यते । तेषामधिष्ठानापेक्षानियमाभावादित्याशङ्क्याऽऽह—न हीति । सर्वविकल्पना[2] साधिष्ठा[3]नैव दृश्यते । न चासतोऽधिष्ठानत्वमारोपितानुवेधाभावात्तदनुवेधात्तु सतोऽधिष्ठानत्वमेष्टव्यम् । तथा च प्राणा[4]दिभावानां वस्तुतोऽसत्त्वेऽपि सति कल्पितानां सत्त्वेन व्यवहारसिद्धिरित्यर्थः । चतुर्थपादार्थमाह—अत इति । स्वेनेति विशेषणं संसृष्टरूपेण व्यभिचाराङ्गीकारार्थम् । कल्पनराहित्यदशायामेवाद्वयता शिवेत्याशङ्क्य कल्पनामात्रस्याशिवत्वान्नैवमित्याह—कल्पनेति । त्रासा[6]दीत्यादिशब्देन हर्षशोकादयो गृह्यन्ते । यदुक्तमद्वयता शिवेति तदुपपादयति—अद्वयतेति ॥ ३३ ॥

नाऽऽत्मभावेन नानेदं न स्वेनापि कथंचन ।
न पृथङ्नापृथक्किंचिदिति तत्त्वविदो विदुः ॥ ३४ ॥

कुतश्चाद्वयता शिवा । नानाभूतं पृथक्त्वमन्यस्यान्यस्माद्यत्र दृष्टं तत्राशिवं भवेत् । न ह्यत्राद्वये परमार्थसत्यात्मनि प्राणादिसंसारजातमिदं जगदात्मभावेन परमार्थस्वरूपेण निरूप्यमा[8]णं नाना वस्त्वन्तरभूतं भवति । यथा र[9]ज्जुस्वरूपे[10]ण प्रकाशेन निरूप्यमाणो न नानाभूतः कल्पितः सर्पोऽस्ति तद्वत् । नापि स्वेन प्राणाद्यात्मनेदं विद्यते कदाचिदपि रज्जुसर्पवत्कल्पितत्वादेव । तथाऽन्योन्यं न पृथक्प्राणादि वस्तु यथाऽश्वान्महिषः पृथग्विद्यत एव । अतोऽसत्त्वान्नापृथग्विद्यतेऽन्योन्यं परेण वा किंचिदिति । एवं परमार्थतत्त्व[11]मात्मविदो ब्राह्मणा विदुः । अतोऽशिवहेतुत्वाभावादद्वयतैव शिवेत्यभिप्रायः ॥ ३४ ॥

किं च किमिदं नाना[12]भूतं द्वैतमात्मतादात्म्येन वा सिध्य[13]ति[14] स्वातन्त्र्येण वेति विवेक्तव्यम् । नाऽऽद्य इत्याह—नाऽऽत्मभावेनेति । इदं हि ना[15]नाभूतं द्वैतं नाऽऽत्मतादात्म्येन सेद्धुमर्हति । जडाजडयोर्विरुद्धस्वभावयोस्तादात्म्यायोगात् । भेदादिशून्यात्मतादा[16]त्म्ये च द्वैतस्य नानात्वासिद्धेरित्यर्थः । द्वितीयं दूषयति—न स्वेनेति । स्वेन सत्ताप्रतीत्योरन्यानपेक्षतालक्षणस्वातन्त्र्येणापि नेदं द्वैतं सेद्धुं पारयति । तथा स्वातन्त्र्ये सत्यात्मत्वप्रसङ्गादनात्मनोऽद्वैतत्वापातादित्यर्थः । किं च किमिदं द्वैतमन्योन्यं पृथ[17]ग-

---

१ ग. °न स° । २ छ. सर्वा वि° । ३ छ. °ष्ठानैनै° । ४ छ. °णादीनां । ५ छ. °ति विक° । ६ घ. ज. °सादित्या° । ७ ज. नाभेदं । ८ च. °माणे ना° । ९ ख. छ. ज. रज्जुं स्व° । १० च. °पे प्र° । ११ छ. °त्त्ववि° । १२ ख. °भूतद्वै° । १३ घ. सिद्धया वा स्वा° । १४ क. °ति स्वतन्त्रेण । १५ ज. नाऽऽत्मभू° । १६ ज. °त्म्येन द्वै° । १७ क. °थक्पृथ° ।

पृथग्वेति विवेक्तव्यं नाऽऽद्य इत्याह—**न पृथगिति**। न हि किंचिदपि द्वैतं परस्परं[1] पृथगेव सिध्यति पृथक्त्वस्य धर्मिप्रतियोगिरूपावच्छिन्नत्वेनान्योन्याश्रयत्वाद्धर्मत्वस्वरूपत्वयोर्दुर्वचनत्वादित्यर्थः। नापि किंचिदन्योन्यमपृथग्भूत्वा सिध्यति। घटपटादिशब्दानां पर्यायत्वप्रसङ्गाद्व्यवहारलोपापातादित्याह—**नापृथगिति**। अतो वास्तवाकारेण सर्वथा निरूपणासहमेव द्वैतमिति फलितमाह—**इति तत्त्वेति**। युक्तमद्वयता शिवेति तत्र हेत्वन्तरोपन्यासपरत्वं श्लोकस्य दर्शयति[2]—**कुतश्चेति**। तदेव स्फुटयति—**नानाभूतमित्यादिना**। नानाभूतमित्यस्य पर्यायोपादानं पृथक्त्वमिति। तस्य भवकारणत्वं प्रकटयति—**अन्यस्येति**। तत्र व्याघ्रचोरादाविति[3] यावत्। तद्भयकारणं भेददर्शनमद्वये वस्तुनि नास्तीत्याह—**न हीति**। अध्यस्तमधिष्ठानरूपेण तत्त्वतो निरूप्यमाणमसदेव भवतीत्यत्र दृष्टान्तमाह—**यथेति**। प्रदीपप्रकाशेनाधिष्ठानमात्रतया समारोपितः सर्पो यदा निरूप्यते तदा नासौ तद्व्यतिरेकेण सिध्यति। तथा जगदपीदं[4][5] तदात्मस्वरूपेण निरूप्यमाणं नान्यत्वेन सिध्येदित्यर्थः। एवं प्रथमपादं व्याख्याय द्वितीयपादं व्याचष्टे—**नापीति। कदाचिदपीति**। कल्पनावस्थायां प्रागूर्ध्वं चेत्यर्थः। न पृथगित्यस्यार्थमाह—**तथेति**। पृथक्त्वस्यान्योन्याश्रयत्वेन दुर्वचनत्वात्। द्वैधर्म्योदाहरणं तु प्रातीतिकं पृथक्त्वमधिकृत्याविरुद्धम्। नापृथगित्यादि व्याकरोति—**अत इति**। द्वैतस्य प्रागुक्तन्यायेनासत्त्वान्न[6] तदन्योन्यं वा परेणाऽऽत्मना वा सहापृथग्भूत्वा सेद्धुमर्हति। अतो दुर्निरूपत्वान्न किंचिद्द्वैतं नामास्तीति ब्रह्मविदां मतमित्यर्थः। दृष्टं हि द्वैतं भयहेतुस्तदस्पृष्टं[7] पुनरद्वैतमभयमेवेत्युपसंहरति—**अत इति** ॥ ३४ ॥

## वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः। निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः ॥ ३५ ॥

तदेतत्सम्यग्दर्शनं स्तूयते[8]। विगतरागभयद्वेषक्रोधादिसर्वदोषैः[9] सर्वदा मुनिभिर्मननशीलैर्विवेकिभिर्वेदपारगैरवगतवेदार्थतत्त्वैर्ज्ञानिभि[10]र्निर्विकल्पः[11] सर्वविकल्पशून्योऽयमात्मा दृष्ट उपलब्धो वेदान्तार्थतत्परैः प्रपञ्चोपशमः प्रपञ्चो द्वैतभेदविस्तारस्तस्योपशमोऽभावो यस्मिन्स आत्मा प्रपञ्चोपशमोऽत एवाद्वयः[12]। विगतदोषैरेव[13] पण्डितैर्वेदान्तार्थत-

---

१ छ. °स्परपृ°। २ ग. °र्यायादा°। ३ छ. व्याघ्रादिचो°। ४ ग. छ. °पीदमात्म°। ५ ग. °दं तादात्म्यस्व°। ६ क. °त्वात्तद°। ७ ग. घ. °दस्पष्टं। ङ. °दसंस्पृ°। ८ ख. °ते। वीत° । घ. ङ. ज. °ते। वीतो रागभयद्वेषक्रोधादिदोषो येषां तैः सर्वदा। ९ च. झ. °दोषैर्मुनि°। १० झ. °र्वैकल्पनाशू°। ११ ख. °श्चो द्वै°। १२ झ. °यः। तेन वि°। १३ क. °तद्वेषै°।

त्परैः[1] संन्यासिभिः[2] परमात्मा द्रष्टुं शक्यो नान्यै रागादिकलुषितचेतोभिः[3] स्वपक्षपा[4]तिदर्शनैस्तार्किकादिभिरित्यभिप्रायः ॥ ३५ ॥

किमिति यथोक्तमद्वैतं सर्वेषां न प्रतीतिगोचरतामाचरतीत्याशङ्क्याऽऽह—वीतेति[5]। रागादिप्रतिबन्धविधुराणामेव यथोक्त[6]मद्वैतदर्शनं न सर्वेषामित्यर्थः। श्लोकस्य तात्पर्यमाह—तदेतदिति। स्तुतिश्च तदुपायप्रवृत्तावुपकरोतीति शेषः। आदिपदेन सम्यग्दर्शनप्रतिबन्धकाः सर्वे[7] दोषाः संगृह्यन्ते। रागादिविमोको यदा कदाचिदनधिकारि[8]णामपि संभवत्यतो विशिनष्टि—सर्वदेति। सदा रागादिव्यावृत्तौ विवे[9]कं हेतुं प्रपञ्चयति—मुनिभिरिति। विवेके च पदशक्तेर्वाक्यतात्पर्यस्य च परिज्ञानं कारणमित्याह—वेदेति। एवं[10] सम्यग्ज्ञानाधिकारिणं साधनचतुष्टयसंपन्नमुक्त्वा तद्विषयं निरूपयति—निर्विकल्प इति। आत्मनश्चाक्षु[11]षत्वशङ्कां वारयति—उपलब्ध इति। हिशब्दद्यो[12]त्य[13]मर्थमाह—वेदान्तेति। सर्वविकल्प[14]शून्यत्वमात्मनः स्फुटयितुं प्रपञ्चोपशम[15]विशेषणम्। आत्मनोऽभावत्वं बहुव्रीहिणा प्रत्युदस्यते। हेतुहेतुमद्भावेन पुनरुक्तिं विशेष[16]णयोर्व्यासे[17]धति—अत एवेति। सम्यग्दर्शनाधिकारिणो दर्शितानुपसंहरति—विगतेति। अनधिकारिणो दर्शयन्वैशेषिकवैनाशिकादिशास्त्राभिज्ञानामपि तद[18]न्तर्भावं सूचयति—नान्यैरिति ॥ ३५ ॥

**तस्मादेवं विदित्वैनमद्वैते योजयेत्स्मृतिम्।**
**अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत् ॥ ३६ ॥**

यस्मात्सर्वानर्थप्रशमरूपत्वादद्वयं शिवमभयमत ए[19]वं विदि[20]त्वैनमद्वै[21]ते स्मृतिं योजयेत्। अद्वैतावगमायै[22]व स्मृतिं कुर्यादित्यर्थः। तच्चाद्वैतमवगम्याहमस्मि परं ब्रह्मेति विदित्वाऽशनायाद्यतीतं साक्षादपरोक्षादजमात्मानं सर्वलोकव्यवहारातीतं[23] जडवल्लोकमाचरेत्। अप्रख्यापयन्नात्मानमहमेवंविध इत्यभिप्रायः ॥ ३६ ॥

मिथ्याज्ञान[24]प्र[25]चयसंस्काराद्वेदान्तार्थतात्पर्यवतां पण्डितानामपि नाद्वैते प्रत्ययदार्ढ्यं

---

१ घ. च. ज. °त्परैरयमा°। २ ख. झ. °सिभिरयमा°। ३ झ. °भिः प°। ४ क. ख. छ. छ. °पातद°। ५ क. विगतेति। ६ छ. °क्तसम्यग्दर्श°। ७ झ. सर्वदो°। ८ क. घ. °रिणम°। ९ घ. छ. °वेकहे°। ज. °वेके हे°। १० छ छ. °वं हि स°। ११ ख. छ. °षत्वाश°। १२ ख. छ. °द्योतिम°। १३ झ. °त्यर्थं°। १४ क. °ल्पत्वशू°। १५ ख. घ. ङ. ज. °म इति वि°। १६ ग. ज. °णयोः प्रतिषेधयति। १७ घ. ज. °धयति। १८ झ. °दभावं। १९ च. एनं विदित्वाऽद्वै°। २० क. °दित्वाऽद्वै°। २१ घ. च. ज. °ते यो°। २२ घ. ज. °गमनेनैव। २३ क. छ. °तीतो ज°। २४ ख. °नप्रपञ्चप्र°। २५ ग. °प्रपञ्चसं°।

सिध्यतीत्याह—**तस्मादिति**। शास्त्रादद्वैतमवगम्य स्मृतिसंतति[1] कुर्वतो लोकानुवर्तने विधिनियममाह—**अद्वैतमिति**। तस्मादित्यस्यार्थमाह—**यस्मादिति**। एवमिति निर्विकल्पत्वादिपरामर्शः। विदित्वा शास्त्रतोऽवगम्येत्यर्थः। अद्वैतावगतिदार्ढ्यार्थं स्मृतिसंततिकर्तव्यतायां नियमविधिमभ्यनुजानाति—**अद्वैत इति**। अद्वैतमित्याद्युत्तरार्धं विभजते—**तच्चेति**। जडसदृ[3]शस्य कथं लोकाचरणमबुद्धिपूर्वकारि[4]त्वादित्याशङ्क्याऽऽह—**सर्वलोकेति**। लौकिकव्यवहारानतीत्य विदुषो जडवदाचरणं कीदृशमित्यपेक्षायां चतुर्थं पादमनूद्य तात्पर्य[6]माह—**जडवदिति**। एवंविधोऽहमित्यात्मानं विद्याभिजनादिभि[7]रप्रख्यापयञ्जडवदेव विद्वाँल्लोकमाचरेदिति योजना[8]॥ ३६॥

## निस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च।
## चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥३७॥

**कया चर्यया लोकमाचरेदित्याह—स्तुतिनमस्कारादिसर्वकर्मवर्जितस्त्यक्तसर्वबाह्यैषणः प्रतिपन्नपरमहंसपारिव्राज्य[9][10] इत्यभिप्रायः। "एतं[11] वै तमात्मानं विदित्वा" इत्यादिश्रुतेः। "तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः" इत्यादिस्मृतेश्च। चलं शरीरं प्रतिक्षणमन्यथाभावात्। अचलमात्मतत्त्वम्[12]। यदा कदाचिद्भोजनादिव्यवहारनिमित्तमाकाशवद[13]चलं स्वरूपमात्मतत्त्वमात्मनो[14] निकेतमाश्रयमात्मस्थितिं[15][16] विस्मृत्याहमिति मन्यते यदा[17] तदा चलो देहो निकेतो यस्य सोऽयमेवं चलाचलनिकेतो विद्वान्न पुनर्बाह्यविषयाश्रयः। स च यादृच्छिको[18] भवेत्। यदृच्छाप्राप्त[19]कौपीनाच्छादनग्रासमात्रदेहस्थितिरित्यर्थः॥ ३७॥**

ननु परापरदेवयोः स्तुतिपूर्वकप्रणामस्य श्राद्धादिक्रियायाश्च कर्तव्यतया प्रतिबन्धात्कथं विदुषो जडवदाचरणमिति तत्राऽऽह—**निस्तुतिरिति**। तथाऽपि जीवता[21] क्वापि स्थातव्यत्वादाश्रयमुद्दिश्य प्रवृत्तेरावश्यकत्वात्कुतो जडसादृश्यमित्याशङ्क्याऽऽह—**चलेति**। चलं चाचलं च चलाचले[22] ते निकेतो यस्याऽऽश्रयः स तथेति यावत्। तथाऽपि

---

१ घ. ज. झ. °कल्पादि°। २ क. °तति क°। ३ घ. °दृ°। क. °डसादृश्यस्य। ४ ज. °वैकत्वा°। ५ ङ. झ. °त्याह। ६ ग. झ. °त्पर्यार्थमा°। ७ क. °भिर्न प्र°। ८ क. °ना। न°। ९ क. °न्नपारमहंस्यपा°। १० ङ. च. ज. झ. °सपरि°। ११ घ. ङ. च. एवं चैत°। १२ झ. °त्मत्वम्। १३ च. °चलस्व°। १४ घ. ज. °त्मनो। १५ क. °तनमा°। १६ ज. °श्रममा°। १७ छ. °दा च°। १८ च. झ. °को य°। १९ झ. °च्छायाः प्रा°। २० झ. °प्रमाणगम्यस्य। २१ क. झ. °वतां क्वा°। ग. °वतायाः क्वा°। २२ घ. ङ. ज. °ले नि°।

कौपीनाच्छादनाशनपानादिदेहस्थितिप्रयोजकापेक्षया[1] प्रवृत्तिध्रौव्यान्न[2] विदुषो जडतुल्यतेत्याशङ्क्याऽऽह—यतिरिति। आकाङ्क्षापूर्वकं पूर्वार्धाक्षराणि व्याचष्टे—कयेत्यादिना। वर्णाश्रमाभिमानवतस्तत्तत्कर्मसु[3] वर्तमानस्य कथमिदं विशेषणमित्याशङ्क्याऽऽह[4]—त्यक्तेति। परमहंसस्य पारिव्राज्यं प्रतिपत्तुमशक्यमप्रामाणिकत्वादिति चेन्मैवं श्रुतिस्मृतिसिद्धत्वादित्याह—एतमिति। विदित्वेत्यापातिकं वेदनं व्युत्थानहेतुत्वेनोच्यते। तस्मिन्नेव परस्मिन्वस्तुनि विषयान्तरेभ्यो व्यावृत्ता बुद्धिर्येषामिति तथा। तदेवं परं वस्त्वात्मा[5] निरुपचरितं स्वरूपं येषां ते तथोच्यन्ते। तस्मिन्नेव परस्मिन्नात्मनि निष्ठा निश्चयेन स्थितिर्येषां ते तथेत्याह—तन्निष्ठा इति। तदेवाऽऽत्मभूतं[6] परं वस्तु परमयनं परा गतिर्येषां ते तथेत्याह—तत्परायणा इति। आदिशब्देन सर्वकर्माणि मनसेत्यादिवाक्यं गृह्यते। कदा पुनश्चलो देहो[8] विदुषो निकेतो भवति तत्राऽऽह—यदेति। अविवक्षिते हि कालविशेषे विवक्षितं व्यवहारं निमित्तीकृत्याऽऽत्मस्थितिमुक्तविशेषणवतीं विस्मृत्याहंकारममकारपरवशो यदा विद्वानवतिष्ठते तदेति योजना। स्वभावतस्त्वचलमात्मस्वरूपमेवास्य निकेतनम्। चलं पुनः शरीरमुपदर्शितविस्मरणद्वारेणेति निगमयति—सोऽयमिति। अविदुषो विशेषार्थं व्यावर्त्यं कीर्तयति—न पुनरिति। चतुर्थपादार्थमाह[10]—स चेति॥ ३७॥

**तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः।**
**तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत्॥३८॥**

## इति गौडपादीयकारिकासु वैतथ्याख्यं द्वितीयप्रकरणम्॥ २॥

बाह्यं पृथिव्यादि तत्त्वमाध्यात्मिकं च देहादिलक्षणं[11] रज्जुसर्पादिवत्स्वप्नमायादिवच्चासत्। "वाचारम्भणं विकारो नामधेयम्" इत्यादिश्रुतेः। आत्मा च सबाह्याभ्यन्तरो ह्यजोऽपूर्वोऽनपरोऽनन्तरोऽबाह्यः कृत्स्न आकाशवत्सर्वगतः सूक्ष्मोऽचलो निर्गुणो निष्कलो निष्क्रियस्तत्सत्यं स आत्मा "तत्त्वमसि" इति श्रुतेः। इत्येवं तत्त्वं दृष्ट्वा तत्त्वीभूतस्तदारामो न बाह्यरमणो यथाऽतत्त्वदर्शी कश्चिच्चित्तमात्मत्वेन प्रतिपन्नश्चित्तचलनमनु चलितमात्मानं मन्यमानस्तत्त्वाच्चलितं देहादिभूतमात्मानं कदाचिन्मन्यते प्रच्युतोऽहमात्मतत्त्वादिदानीमिति। समाहिते तु मनसि कदाचित्तत्त्वीभूतं[12] प्रसन्नात्मानं मन्यत इदानीमस्मि तत्त्वीभूत इति। न तथाऽऽत्मविद्-

१ ङ. °पेक्षायाः प्र°। घ. °पेक्षायां प्र°। २ ज. प्रतिध्रौ°। ३ ज. स्तत्क°। ४ ग. °त्याह–ए°। ५ छ. °व स्वात्मा। ६ घ. ज परव°। ७ ज. आत्मश°। ८ छ. °हो निके°। ९ ज. °रप°। १० ग. झ. °र्थमा°। ११ घ. °णं च र°। १२ घ. ङ. ज. °त्तत्त्वीभू°।

वेत् । आत्मन एकरूपत्वात्स्वरूपप्रच्यवनासंभवाच्च । सदैव ब्रह्मास्मी-त्यप्रच्युतो भवेत्तत्त्वात्सदाऽप्रच्युतात्मतत्त्वदर्शनो भवेदित्यभिप्रायः । "शुनि चैव श्वपाके च" । "समं सर्वेषु भूतेषु" इत्यादिस्मृतेः ॥ ३८ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य शंकरभगवतः कृतौ गौडपादीयागमशास्त्रभाष्ये वैतथ्याख्यं द्वितीयप्रकरणम् ॥ २ ॥

अहमेव परं ब्रह्म न मत्तोऽन्यदस्ति किंचिदिति स्मृतिसंततिकरणमपि न कालविशेषनियतं किं तु नैरन्तर्येण कर्तव्यमित्याह—**तत्त्वमिति** । आध्यात्मिकं शरीरादि कल्पितं तत्त्वमधिष्ठानमात्रं दृष्ट्वा बाह्यतो देहाद्बहिरवस्थितं पृथिव्यादि च कल्पितत्वेनावस्तुत्वादधिष्ठानमात्रमेवेत्यनुभूय स्वयमपि द्रष्टा परमार्थवस्तुस्वभावमापन्नस्तत्रैवाऽऽसक्तचेता बाह्येभ्यो विषयेभ्यो व्यावृत्तबुद्धिस्तस्मिन्नेव तत्त्वे परमार्थभूते प्रतिष्ठितस्तद्दर्शननिष्ठः स्यादित्यर्थः । पृथिव्यादेश्च प्रत्येकं परमार्थत्वसंभवे कथमद्वैतनिष्ठा सिध्येदित्याशङ्क्य व्याचष्टे—**बाह्यमित्यादिना** । किं तदुभयोस्तत्त्वं तदाह—**रज्जुसर्पवदिति** । उक्तस्य विकारजातस्यासत्त्वे प्रमाणमाह—**वाचारम्भणमिति** । द्रष्टुरात्मनोऽपि दृश्यप्रतियोगित्वात्तुल्यं वाचारम्भणत्वमित्याशङ्क्याऽऽह—**आत्मा चेति** । भवतु परस्याऽऽत्मनस्तत्तदागमवचननिर्देशादुक्तलक्षणत्वं तथाऽपि द्रष्टुरात्मनो न यथोक्तरूपत्वमित्याशङ्क्याऽऽह—**तत्सत्यमिति** । विशेषणानि तु प्राचीनानि तत्तदागमोपात्तान्यपुनरुक्तानि । द्वितीयार्धं व्याचष्टे—**इत्येवमिति** । आत्मारामत्वं कथमित्याशङ्क्य बाह्यविषयासक्तिं त्यक्त्वा प्रत्यगात्मन्येव *परितृप्तत्वादित्याह—**न बाह्येति** । तत्त्वादप्रच्युतो भवतीत्येतद्व्यतिरेकमुखेन(ण) व्याकरोति—**यथेत्यादिना**।अतत्त्वदर्शीति च्छेदः । आत्मविदो नाव्यवस्थितमात्मदर्शनमित्यत्र हेतुमाह—**आत्मन इति** । सति स्वरूपे स्वरूपात्प्रच्युतेरप्रसक्तत्वात्तत्प्रतिषेधो युक्तो न भवतीत्याशङ्क्याऽऽह—**सदेति** । वस्तुनः सदैकरूपत्वे स्मृतिमुदाहरति—**शुनि चेति** । समदर्शिनः सदैकरूपवस्तुदर्शिन एव पण्डिता नान्ये तथेत्यर्थः । स्वरूपाप्रच्यवने च स्मृतिं दर्शयति—**सममिति** । तत्र हि विनश्यत्स्वविनश्यन्तमिति स्वरूपाप्रच्यवनमुक्तम् ॥ ३८ ॥

इति श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां गौडपादीयकारिकाभाष्यटीकायां वैतथ्याख्यं द्वितीयप्रकरणम् ॥ २ ॥

---

* भवेदित्येतदिति पाठान्तरम् ।

---

१ क. 'दैवं ब्र' । २ क. 'त्मद' । ३ ग. कालावि' । ४ ख. ङ. छ. भवेदित्ये' । ५ ज. वस्तुतः । ६ क. ङ. 'कस्वरू' । ७ क. 'रूपप्र' ।

## अथ गौडपादीयकारिकास्वद्वैताख्यं तृतीयं प्रकरणम्।

---

ॐ ॥ उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते।
प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः ॥ १ ॥

ओंकारनिर्णय उक्तः प्रपञ्चोपशमः शिवोऽद्वैत आत्मेतिप्रतिज्ञामात्रेण। ज्ञाते द्वैतं[1] न विद्यत इति च। तत्र द्वैताभावस्तु वैतथ्यप्रकरणेन स्वप्नमाया[2]गन्धर्वनगरादिदृष्टान्तैर्दृश्यत्वाद्यन्तवत्त्वादिहेतुभिस्तर्केण च प्रतिपादितः। अद्वैतं किमागममात्रेण प्रतिपत्तव्यमाहोस्वित्तर्केणापीत्यत आह[3]। शक्यते तर्केणापि ज्ञातुम्। तत्कथमित्य[4]द्वैतप्रकरणमारभ्यते। उपास्योपासनादिभेदजातं सर्वं वितथं केवल[5]श्चाऽऽत्माऽद्वयः परमार्थ[6] इति स्थितम[7]तीते प्रकरणे। यत उपासनाश्रित उपास[8]नामा[9]त्मनो मोक्षसाधनत्वेन गत उपासकोऽहं ममोपास्यं ब्रह्म। तदुपासनं कृत्वा [10]जाते ब्रह्मणीदानीं वर्तमानोऽजं ब्रह्म शरीरपातादूर्ध्वं प्रतिपत्स्ये प्रागुत्पत्तेश्चाजमिदं सर्वमहं च। यदात्मकोऽहं प्रागुत्पत्तेरिदानीं [11]जातो जाते ब्रह्मणि[12] च वर्तमान उपासनया पुनस्तदेव प्रतिपत्स्य इत्येवमुपासना[13]श्रितो धर्मः साधको येनैवं क्षुद्रब्रह्म[14]वित्तेनासौ कारणेन कृपणो दीनोऽल्पकः स्मृतो नित्याजब्रह्मदर्शिभिरित्यभिप्रायः। "यद्वाचा[15]ऽनभ्युदितं येन[16] वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादिश्रुतेस्तलवकाराणाम् ॥ १ ॥

तर्कावष्टम्भेन द्वैतवैतथ्यनिरूपणं परिसमाप्या[17]द्वैतमार्थिकमपि तर्कतः संभावयितुं प्रकरणान्तरं प्रारिप्सुरुपास्योपास[18]कभेददृष्टिं तावदपवदति—उपासनेति। देहस्य धारणाद्धर्मो जीवो भूतसंघाताकारेण जाते ब्रह्मणि तदभि[19]मानित्वेन वर्तते। स प्रागुत्पत्ते[20]रजं सर्वमित्येवं कालावच्छिन्नं वस्तु मन्यते। स पुनरुपासनां पुरुषार्थसाधनत्वेनाऽऽश्रि[21]तस्तदेव ब्रह्म प्रतिपत्स्ये शरीरपातादूर्ध्वमित्येवं यतो मिथ्याज्ञानवानवतिष्ठते

---

१ च. द्वैते। २ च. °यायां ग°। ३ च. °ह। अशक्यत°। च. °ह नु श°। ४ च. °त्यत अद्वै°। ५ झ. °ल आत्माऽ°। ६ घ. ङ. च. ज. झ. °र्थत इ°। ७ क. °तीतप्र°। ८ ङ. छ. °सनमा°। ९ ख. घ. ज. °माश्रित्य। उपासनामा°। १० घ. ङ. ज. ज्ञाते। ११ झ. जाते। १२ च. झ. °णि व°। १३ ग. ङ. ज. °नामाश्रि°। १४ च. °ह्मचित्ते°। १५ क. °चा वाऽभ्यु°। १६ च. °न च वा°। १७ क. ख. छ. °द्वैतं पारमा°। १८ ग. °कदृ°। १९ झ. °मानत्वे°। २० क. °रजः स°। २१ ख. °श्रित्य ततस्त°।

तेनासौ कृपणोऽल्पको ब्रह्मविद्भिः स्मृतश्चिन्तित इत्यर्थः । प्रकरणान्तरमवतारयन्वृत्तम-नुद्रवति—**ओंकारेति** । तस्य हि निर्णये प्रथमे [1]प्रकरणे प्रपञ्चोपशमः शिवोऽद्वैत इति विशेषणैरात्मा प्रतिज्ञामात्रेणा[2]द्वितीयो व्याख्यात इत्यर्थः । द्वितीयप्रकरणार्थं संक्षिप्यानुवदति—**ज्ञात इति** । तत्रैवाऽऽद्ये प्रकरणे ज्ञाते[3] द्वैतं न विद्यत इत्यत्र प्रति-ज्ञामात्रेण द्वैताभाव उक्तः । स तु द्वितीयेन प्रकरणेन हेतुदृष्टान्तात्मकेन तर्केण च प्रतिपादितो नात्र प्रतिपादयितव्यमवशिष्टमस्तीत्यर्थः । तृतीयं प्रकरणमाङ्क्षापूर्वक-मवतारयति—**अद्वैतमिति** । नैषा तर्केण मति[4]रापनेये[5]ति श्रुतेरद्वैतं कथं तर्केण ज्ञातुं शक्यमित्याक्षिपति—**तत्कथमिति** । स्वतन्त्रत[6]र्काप्रवेशेऽपि तस्मिन्नागमिकतर्कस्य सह-कारितया संभावनाहेतुत्वात्तर्केणापि ज्ञातुं शक्यमिति व्यवहारोपपत्तिरिति मत्वाऽऽह—**अद्वैतेति** । यदि तर्केणाद्वैतं संभावयितुं प्रकरणमारभ्यते तर्हि किमित्युपासकनिन्दा प्रथमं[7] प्रस्तूयते तत्राऽऽह—**उपास्येति** । उक्तवक्ष्यमाणविरोधित्वादुपासक[8]स्य तन्नि-न्दा प्रकृतोपयोगिनीत्यर्थः । कथं तर्हि त[9]त्र तत्रा[10]जत्वमात्मनो दर्शयन्ती श्रुतिर्घटिष्यते तत्राऽऽह—**प्रागिति** । प्रागवस्थायां सर्वमिदमजमहं च तथेत्युपास[11]को यतो मन्यतेऽ-तश्च प्रागवस्थब्रह्मविषया भविष्यत्यजत्वश्रुतिरित्यर्थः । कार्यस्थित्यवस्थायां यदि ब्रह्म तन्मात्रमिष्टं तर्हि किमुपासनया प्राप्तव्यमित्याशङ्क्याऽऽह—**यदात्मक इति** । इदा-नीमुत्पत्त्यवस्थायां जातो जाते ब्रह्मणि स्थित्यवस्थायां वर्तमानोऽहं प्रागुत्पत्तेर्यदात्मकः सन्नासं तदेव पुनः प्रलयावस्थायामुपासनया प्रतिपत्स्ये तत्क्र[12]तुन्यायादिति संबन्धः । तलवकाराणां शाखायामुपास्यस्य[13] ब्रह्मत्वनिषेधदर्शनाच्चोपासकनिन्दा युक्तेत्याह—**यद्वा-चेति** । अनभ्युदितमनभिप्रकाशितमभ्युद्यतेऽभिप्रकाश्यते उ[14]पासते वाचा विषयी कुर्व-न्तीत्यर्थः । आदिशब्देन यन्मनसेत्यादि गृह्यते ॥ १ ॥

**अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम् ।**
**यथा न जायते किंचिज्जायमानं समन्ततः ॥ २ ॥**

सबाह्याभ्यन्तरमजमात्मानं प्रतिपत्तुमशक्नुवन्नविद्यया दीनमात्मानं मन्यमानो जातो[15]ऽहं जाते ब्रह्मणि वर्ते तदुपासनाश्रितः सन्ब्रह्म प्रति-पत्स्य इत्येवं प्रतिपन्नः कृपणो भवति यस्मादतो वक्ष्याम्यकार्पण्यमकृप-णभावमजं ब्रह्म । तद्धि का[16]र्पण्यास्पदम् "यत्रा[17]न्योऽन्यत्पश्यत्य[18]न्यच्छृणो-

---

१ छ. ज. प्रप° । २ झ. °णाद्वैती° । ३ ज. °ते तत्त्वं न । ४ घ. °तिरप° । ५ क. °रापनये° । ६ ङ. °तर्कोप्र° । ७ घ. °मं स्तू° । ८ छ. °स्य निन्दा । ९ क. तत्रा° । १० ग. °त्राज्ञत्व° । ११ क. °सके य° । १२ छ. °तुर्न्याया° । १३ ज. °स्यत्र° । १४ क. ज. उपास्यते । १५ घ. °हं व्र° । १६ च. °र्पण्यमास्प° । १७ च. °न्योऽन्यं प° । १८ च. °त्यन्यं शृणो° ।

त्यन्यद्विजानाति तदल्पं मर्त्यमसत्" "वाचारम्भणं विकारो नामधेयम्" इत्यादिश्रुतिभ्यः । तद्विपरीतं सबाह्याभ्यन्तरमजमकार्पण्यं भूमाख्यं ब्रह्म । यत्प्राप्याविद्याकृतसर्वकार्पण्यनिवृत्तिस्तदकार्पण्यं वक्ष्यामीत्यर्थः । तदजाति, अविद्यमाना जातिरस्य । समतां गतं सर्वसाम्यं गतम् । कस्मात् । अवयववैषम्याभावात् । यद्धि सावयवं वस्तु तदवयववैषम्यं गच्छज्जायत इत्युच्यते । इदं तु निरवयवत्वात्समतां गतमिति न कैश्चिदवयवैः स्फुटत्यतोऽजात्यकार्पण्यम् । समन्ततः समन्ताद्यथा न जायते किंचिदल्पमपि न स्फुटति रज्जुसर्पवदविद्याकृतदृष्ट्या जायमानं येन प्रकारेण न जायते सर्वतोऽजमेव ब्रह्म भवति तथा तं प्रकारं शृण्वित्यर्थः ॥ २ ॥

भेददर्शिनमुपासकमद्वैतविरोधिनं निन्दित्वा संप्रत्यद्वैतप्रतिज्ञां करोति—**अत इति**। जातिर्जन्म तद्रहितमजाति । तत्र हेतुमाह—**समतामिति** । जन्मराहित्यं साधयति—**यथेति** । अतःशब्दार्थमाह—**सबाह्येति** । प्रतिज्ञाभागं विभजते—**अकृपणेति** । तदेव व्यतिरेकमुखेन(ण) स्फोरयति—**तद्धीति** । दर्शनादिविशेषव्यवहारगोचरीभूतं कार्यजातं परिच्छिन्नं नाशि चोच्यते । तदेव कृपणत्वालम्बनमित्यर्थः । तच्च मिथ्याभूतमित्यत्र प्रमाणमाह—**वाचारम्भणमिति** । कार्पण्यमुक्त्वा तदभावरूपमकार्पण्यं प्रकटयति—**तद्विपरीतमिति** । प्राप्य ज्ञात्वेति यावत् । द्वितीयपादं व्याचष्टे—**तदजातीत्यादिना** । सर्वात्मना साम्यं निर्विशेषत्वं गतमित्यत्र हेतुं पृच्छति—**कस्मादिति** । निर्विशेषत्वे हेतुमाह—**अवयवेति** । हेतुमेव प्रकटयन्व्यतिरेकमुखेना(णा)जत्वं प्रपञ्चयति—**यद्धीत्यादिना** । समन्तत इति पूर्णत्वसंकीर्तनम् । द्वितीयार्धं व्याचष्टे—**यथेत्यादिना** । यथा रज्ज्वां सर्पो भ्रान्त्या जायते तथा सर्वं भ्रान्तिदृष्ट्या जायमानत्वेन भासमानमपि यथा येन प्रकारेण वस्तुतो न जायते तथा किं तु सर्वतो देशतः कालतो वस्तुतश्च पूर्णं कूटस्थमेव वस्तु भवति तथा तं प्रकारमिति संबन्धः ॥ २ ॥

**आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः ।**
**घटादिवच्च संघातैर्जातावेतन्निदर्शनम् ॥ ३ ॥**

अजाति ब्रह्माकार्पण्यं वक्ष्यामीति[1] प्रतिज्ञातं तत्सिद्ध्यर्थं हेतुं दृष्टान्तं[3] च वक्ष्यामीत्याह[4] । आत्मा परो हि यस्मादाकाशवत्सूक्ष्मो[5] निरवयवः सर्वगतं आकाशवदुक्तो जीवैः क्षेत्रज्ञैर्घटाकाशैरिवं[6] घटाकाशतुल्य उदित

---

१ क. °मेवं ब्र° । २ च. °ति यत्प्रति° । ३ क. °न्तं व° । ४ छ. °मीत्यत आह । ५ च. °तस्तस्मादाका° । ६ च. °शैर्निरवयवघटाका° । ७ झ. °व महाका° ।

**उक्तः । स एवाऽऽकाशसमः पर[1] आत्मा । अथ वा घटाकाशै[2]र्यथाऽऽकाश उदित उत्पन्नस्तथा परो जीवात्मभिरुत्पन्नो जीवात्मनां परस्मादात्मन उत्पत्तिर्या श्रूयते वेदान्तेषु सा महाकाशाद्घटाकाशोत्पत्तिसमा[3] न परमार्थ[4]त इत्यभिप्रायः । तस्मादेवाऽऽकाशाद्घटादयः संघाता यथोत्पद्यन्त एवमाकाशस्थानीयात्परमात्मनः पृथिव्यादिभूतसंघाता आध्यात्मिकाश्च कार्यकारणलक्षणा रज्जुसर्पवद्विकल्पिता जायन्ते। अत उच्यते घटादिवच्च संघातैरुदित इति । यदा मन्दबुद्धिप्रतिपिपादयिषया श्रुत्याऽऽत्मनो जातिरुच्यते जीवादीनां तदा जातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदिताकाशवदित्यादिः ॥ ३ ॥**

प्रतिज्ञावाक्ये ब्रह्मशब्देन परमात्मा प्रकृतः स कीदृगित्यपेक्षायामाह—**आत्मा हीति** । जीवभेदप्रतीतिस्तर्हि कथमित्याशङ्क्याऽऽह—**जीवैरिति** । यथाऽऽकाशो विभुत्वादिधर्मः स्वगततात्त्विकभेदवान्न भवति तथा परमात्मा विशेषाभावात् । यथा च महाकाशो घटाकाशाकारेण प्रतीयते तथा परमात्मा नानाविधजीवाकारेण प्रतीतिगोचरो भवतीत्यर्थः । कथं संघातानां परस्मादुत्पत्तिरित्याशङ्क्याऽऽह—**घटादिवदिति** । यथा मृदः सकाशाद्धटादयो जायन्ते तथा परमात्मैव पृथिव्यादिसंघाताकारेण जायत इत्यर्थः । यदाऽऽत्मनो जीवादीनामुत्पत्तिरिष्टा तदा तस्यामुत्पत्तौ दृष्टान्तवचनमेतदित्याह—**जातविति** । श्लोकस्य वृत्तानुवादपूर्वकं तात्पर्यमाह—**अजातीत्यादिना** । प्रथमपादस्याक्षरार्थमाह—**आत्मेत्यादिना** । विमतः स्वगततात्त्विकभेदशून्यः सूक्ष्मत्वान्निरवयवत्वाद्विभुत्वादाकाशवत् । न च परमाण्वादौ सूक्ष्मत्वादेर्व्यभिचारः । तस्यैवासंमतत्वात् । क्वचिदपि तात्त्विकभेदासंप्रतिपत्तेश्चेत्यर्थः । जीवैरित्यादि व्याचष्टे—**जीवैरिति** । जीवाकारेण परमात्मैवोक्तः । "क्षेत्रज्ञं चापि मां विद्धि" इति स्मृतेरित्यर्थः । उदितशब्दश्चेदुक्तार्थस्तर्हि परस्यैवाऽऽत्मनः संघातरूपेणोक्तत्वे सप्रपञ्चत्वं प्रसज्येतेत्याशङ्क्याऽऽह—**अथ वेति** । तर्हि नाऽऽत्माऽश्रुतेरितिन्यायविरोधः स्यादित्याशङ्क्याऽऽह—**जीवात्मनामिति** । तृतीयपादं व्याचष्टे—**तस्मादेवेति** । उक्तेऽर्थे वाक्यमवतारयति—**अत इति** । आकाशस्यावकाशप्रदाने च(?) घटाद्युत्पत्तौ कारणत्वं निर्विकारस्यैव दृष्टमिति द्रष्टव्यम् । जातावित्यादेरर्थमाह—**यदेति** ॥ ३ ॥

---

१ ज. °रमात्मा । झ. °र एवाऽऽत्मा° । २ क. ङ. °र्यथोदि° । ३ क. °मानं प° । ४ झ. °र्थे इ° । ५ ज. °ताश्चाऽऽध्या° । ६ छ. झ. °बुद्धिं प्र° । ७ घ. °चारास्तस्यै° । ८ क. छ. °दिना व्या° । ९ ज. अत एवे° । १० क. छ. °वात्मानमि° ।

घटादिषु प्रलीनेषु घटाकाशादयो यथा।
आकाशे संप्रलीयन्ते तद्वज्जीवा इहाऽऽत्मनि ॥ ४ ॥

यथा घटाद्युत्पत्त्या घटाकाशाद्युत्पत्तिः। यथा[2] घटादिप्रलये[3] घटाकाशादिप्रलयस्तद्वद्देहादिसंघातोत्पत्त्या जीवोत्पत्तिस्तत्प्रलये च जीवानामिहाऽऽत्मनि प्रलयो न स्वत इत्यर्थः ॥ ४ ॥

अद्वैतस्य जीवसृष्टिश्रुतिविरोधं परिहृत्य तस्यैव जीवप्रलयश्रुत्या विरोधमाशङ्क्य परिहरति—घटादिष्विति। औपाधिकौ जीवानामुत्पत्तिप्रलयौ न स्वाभाविकौ। तथा चोत्पत्तिश्रुत्या विरोधाभाववदद्वैतस्य प्रलयश्रुत्याऽपि न विरोधोऽस्तीति श्लोकाक्षरव्याख्यानेन प्रकटयति—यथेत्यादिना ॥ ४ ॥

यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते।
न सर्वे संप्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः ॥ ५ ॥

सर्वदेहेष्वात्मैकत्व एकस्मिञ्जननमरणसुखादिमत्यात्मनि सर्वात्मनां तत्संबन्धः क्रियाफलसांकर्यं च स्यादिति य आहुर्द्वैतिनस्तान्प्रतीदमुच्यते। यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते संयुक्ते न सर्वे घटाकाशादयस्तद्रजोधूमादिभिः संयुज्यन्ते तद्वज्जीवाः सुखादिभिः।

इदानीमद्वैतस्य व्यवस्थानुपपत्त्या विरोधमाशङ्क्य परिहरति—यथैकस्मिन्निति। उक्तदृष्टान्तवशादेकस्मिञ्जीवे सुखादिसंयुक्ते सत्यपरे जीवास्तैरेव सुखादिभिर्न[8] संयुज्यन्त औपाधिकभेदादित्याह—तद्वदिति। श्लोकव्यावर्त्यामाशङ्कां दर्शयति—सर्वदेहेष्विति। ऐकात्म्ये कर्तर्येकस्मिन्कर्तारः सर्वे भोक्तरि चैकस्मिन्भोक्तारः सर्वे भवेयुरित्यव्यवस्थान्तरमाह—क्रियेति। व्यवस्थानुपपत्त्या द्वैतमेष्टव्यमिति वदन्तं प्रत्युत्तरत्वेन श्लोकमवतारयति—तान्प्रतीति। किमिदमैकात्म्ये सांकर्यं किमेकस्मिञ्जीवे व्यवस्थितेन सुखादिना जीवान्तराणां तद्वत्त्वं स्यादित्युच्यते किं वा सर्वोपाधिष्वात्मैक्यात्तस्य स्वरूपेण सर्वसुखादिमत्त्वं स्यादित्यापाद्यते[10] तत्राऽऽद्यं प्रत्याह—तद्वदिति।

नन्वेक एवा[11]ऽऽत्मा। बाढम्। ननु न श्रुतं त्वयाऽऽकाशवत्सर्वसं[12]-

---

१ क. °जीव इ°। २ क. ख. °था च घ°। च. °था वा घ°। ३ च. झ. °येन जी°। ४ ग. °लयौ। ५ ख. °स्य ल°। ६ घ. ङ. ज. तत्तत्सं°। ७ च. °फलं सां°। ८ क. °नै यु°। ९ ख. °मेवेष्ट°। १० घ. °ते वा त°। ११ घ. झ. °वाऽऽकाशो बा°। च. °वाऽऽकाशोऽस्ति बा°। १२ ख. °त्सर्वेषु सं°।

घातेष्वेक एवाऽऽत्मेति । यद्येक एवाऽऽत्मा तर्हि सर्वत्र सुखी दुःखी च स्यात् । न चेदं सांख्यचोद्यं संभवति । न हि सांख्य आत्मनः सुखदुःखादिमत्त्वमिच्छति बुद्धिसमवायाभ्युपगमात्[1]सुखदुःखादीनाम् । न चोपलब्धिस्वरूप[2]स्याऽऽत्मनो भेदकल्पनायां प्रमाणमस्ति । भेदाभावे प्रधानस्य पारार्थ्यानुपपत्तिरिति चेत् । न । प्रधानकृतस्यार्थस्याऽऽत्मन्यसमवायात् । यदि हि प्रधानकृतो बन्धो मोक्षो वाऽर्थः पुरुषेषु भेदेन समवैति ततः प्रधानस्य पारार्थ्यमात्मैकत्वे नोपपद्यत इति युक्ता पुरुषभेदकल्पना । न च सांख्यै[3]र्बन्धो मोक्षो वाऽर्थः पुरुषसमवेतोऽभ्युपगम्यते । निर्विशेषाश्च चेतनमात्रा आत्मानो[4]ऽभ्युपगम्यन्ते । अतः पुरुषसत्तामात्रप्रयुक्तमेव प्रधानस्य पारार्थ्यं सिद्धं न तु पुरुषभेदप्रयुक्तमिति ।

आत्मनः सर्वत्रैकत्वात्तस्य स्वरूपेण सर्वसुखादिमत्त्वमिति द्वितीयं पक्षं विवक्षन्नाशङ्कते—नन्विति । सर्वत्राऽऽत्मैकत्वमुक्तमङ्गी करोति—बाढमिति । तदेकत्वमुपपत्तिशून्यं कथमङ्गीकृतमित्याशङ्क्याऽऽह—ननु नेति । यदि सर्वत्रैकत्वं नियतमिष्यते तर्हि तत्र तत्र सुखित्वं दुःखित्वं च तस्यैवैकस्य[5] प्राप्तमिति[6] व्यवस्थासिद्धिरिति चोदयति—यद्येक एवेति । आत्मस्वरूपस्य सर्वत्रैकत्वेऽपि कल्पितभेदा[7]द्व्यवस्थासिद्धिरित्यभिप्रेत्य किमिदं सांख्यस्य[8] चोद्यं किं वा वैशेषिकादेरिति विकल्प्याऽऽद्यं प्रत्याह—न चेदमिति । किं चैकात्म्यं दूषयता सांख्येन तद्भेदोऽभ्युपगम्यते । स च नाभ्युपगन्तुं शक्यते तन्माना[9]भावादित्याह—न चेति । प्रधानं हि कस्यचिद्भोगमपवर्गं च कस्यचिदादधत्पुरुषविशे[10]षमिष्यते[11] । तच्च पुरुषभेदा[12]भावे नोपपद्यते । तेनार्थापत्त्या पुरुषभेदः सिध्यतीति शङ्कते—भेदेति । अर्थापत्तेरनुदयं वदन्नुत्तरमाह—नेत्यादिना । संक्षिप्तमेवोक्तं विवृणोति—यदि हीति । प्रधानस्य पारार्थ्यसामर्थ्यादेव पुरुषेषु[13] कश्चिदतिशयो भविष्यतीत्याशङ्क्यापसिद्धान्तप्रसङ्गान्मैवमित्याह—निर्विशेषा इति ।

अतः पुरुषभेदकल्पनायां[14] न प्रधानस्य पारार्थ्यं हेतुः । न चान्यत्पुरुषभेदकल्पनायां प्रमाणमस्ति सांख्यानाम् । परसत्तामात्रमेव[15] चैतन्निमि[16]-

१ घ. झ. °त्सुखा° । २ ख, छ. °पमात्रस्याऽऽ° । ३ ङ. छ. °र्बन्धमो° । ४ क. घ. छ. ज. आत्मनोऽ° । ५ क. तस्य चैक° । ६ ख. °ति न व्य° । ७ घ. ज. °भेदव्यव° । ८ ग. झ. °ख्यचो° । ९ घ. ज. झ. तत्र माना° । १० छ. °षविशे° । ११ ग. °ते । स च पु° । १२ ग. झ. °दादेवोप° । १३ क. घ. ङ. ज. °षे क° । १४ क. °यां प्र° । १५ च. °व चेन्निमि° । १६ ख. °तन्यान्नि° ।

**त्तीकृत्य स्वयं बध्यते मुच्यते च प्रधानम् । परश्चोपलब्धिमात्रसत्तास्वरूपेण प्रधानप्रवृत्तौ हेतुर्न केनचिद्विशेषेणेति । केवलमूढतयैव पुरुषभेदकल्पना वेदार्थपरित्यागश्च । ये त्वाहुर्वैशेषिकादय इच्छादय आत्मसमवायिन इति । तदप्यसत् । स्मृतिहेतूनां संस्काराणामप्रदेशवत्यात्मन्यसमवायात् ।**

किं च प्रधानस्य पारार्थ्यं परं शेषिणमपेक्षते । न तस्मिन्भेदमपि काङ्क्षते । अतोऽन्यथाऽप्युपपत्तिरित्याह—**अत इति** । जन्ममरणादिव्यवस्थानुपपत्त्या पुरुषभेदकल्पनमपि न युक्तं व्यधिकरणत्वादिति मत्वाऽऽह—**न चेति** । न केवलं प्रमाणशून्या पुरुषभेदकल्पना ।किं तु प्रयोजनशून्या चेत्याह—**परेति** । ननु न पुरुषसत्तामात्रं निमित्तीकृत्य प्रधानं प्रवर्तते । किं त्वीश्वराधिष्ठितमिति सेश्वरवादिमतमाशङ्क्य तस्यापि पुरुषत्वाविशेषादुपलब्धिमात्रत्वमभ्युपेत्याऽऽह—**परश्चेति** । वेदार्थो वेदप्रतिपाद्यमद्वैतं द्वितीयमुत्थापयति—**ये त्विति** । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा नव विशेषगुणाः । ते च प्रत्येकमात्मसु व्यवस्थया समवेताः स्वी क्रियन्ते । तेषां व्यवस्थानुपपत्त्या प्रतिदेहमात्मभेदसिद्धिरित्यर्थः । किं बुद्ध्यादयो रूपादिवदात्मव्यापिनः किं वा संयोगादिवदेकदेशवृत्तयः । नाऽऽद्यः । ज्ञानादिगुणानामाश्रयव्यापिनामाश्रयसंयुक्ते सर्वस्मिन्नपर्यायेण ज्ञाततादिव्यवहारजनकत्वप्रसङ्गादित्याह—**तदप्यसदिति** । द्वितीये त्वेकदेशः सत्योऽसत्यो वा । प्रथमे घटादिवदात्मनः सत्यैकदेशत्वात्कार्यत्वादिप्रसङ्गः । द्वितीये कल्पितैकदेशानामेव ज्ञानादिगुणवत्त्वमात्मनस्तु न तद्वत्त्वं सिध्यतीत्याह—**स्मृतीति** । स्मृतिहेतवः संस्कारा भावनाख्यास्तेषां ग्रहणमितरेषामुपलक्षणार्थं तेषामात्मनि समवायाभावात्परस्य सिद्धान्तासिद्धिरिति शेषः ।

**आत्ममनःसंयोगाच्च स्मृत्युत्पत्तेः स्मृतिनियमानुपपत्तिः । युगपद्वा सर्वस्मृत्युत्पत्तिप्रसङ्गः । न च भिन्नजातीयानां स्पर्शादिहीनानामात्मनां मनआदिभिः संबन्धो युक्तः । न च द्रव्याद्रूपादयो गुणाः कर्मसामान्यविशेषसमवाया वा भिन्नाः सन्ति परेषाम् । यदि ह्यत्यन्तभिन्ना एव द्रव्यात्स्युरिच्छादयश्चाऽऽत्मनस्तथा च सति द्रव्येण तेषां संबन्धानुपपत्तिः । अयुतसिद्धानां समवायलक्षणः संबन्धो न विरुध्यत इति चेत् । न । इच्छादिभ्योऽनित्येभ्य आत्मनो नित्यस्य पूर्वसिद्धत्वान्नायु-**

---

१ च. °दस° । २ क. °रणव्य° । ३ घ. °नं व° । ४ क. °श्वरादि° । ५ ख. ग. झ. °शवत्त्वात्का° । ६ ज. °त्युपप° । ७ च. °पत्त्वात्सर्वं° । ८ क. संबोधो । ९ क. ख. घ. °या भि° । च. °या भावा भिः । १० घ. ङ. ज. °त्यन्तं भि° । ११ क. °था स° ।

**तसिद्धत्वोपपत्तिः। आत्मनाऽयुतसिद्धत्वे चेच्छादीनामात्मगतमहत्त्ववन्नित्यत्वप्रसङ्गः। स चानिष्टः। आत्मनोऽनिर्मोक्षप्रसङ्गात्।**

किं चाऽऽत्ममनःसंयोगा[1]समवायिकारणाज्ज्ञानानामुत्पत्तिरिष्टा। तथा च सति ग्रहणसमये स्मृतिर्न संभवत्येवेति नियमो नोपपद्यते। ग्रहणकारणसंयोगेनैव स्मृत्यु[2]पपत्तिसंभवादित्याह—**आत्मेति**। किं चाऽऽत्ममनसोः संयोगा[3]देकस्मादेकस्याः स्मृतेः समुत्पत्तिसमये स्मृत्यन्तराण्यपि समुत्पद्येरन्। असमवायिकारणस्य तुल्यत्वात्। न च समु[4]द्बुद्धसंस्कारायौगपद्याद्युगपदनुत्पत्तिः। तेषां तदुद्बोधस्य[5] चाऽऽत्मनि विप्रतिपन्नत्वेन स्मृतिसामग्र्यन्तर्भावा[6]संभवादित्यभिप्रेत्याऽऽह—**युगपद्वेति**। किं च समानजातीयानां स्पर्शादिमतां च परस्परं संबन्धो दृष्टः। यथा मल्लानां मेषाणां रज्जुघटादीनां च तदुभयाभावादात्मनां मनआदिभिः संबन्धासिद्धेर्नोक्तादसमवायिकारणाद्बुद्ध्यादिगुणोत्पत्तिः सिध्यतीत्याह—**न चेति**। गुणादीनां साजात्यस्य स्पर्शादिमत्त्वस्य चाभावेऽपि द्रव्येण संबन्धवदात्मनो मनआदिभिः संबन्धः [7]सिध्येदिति चेन्नेत्याह—**न चेति**। स्वतन्त्रं सन्मात्रं द्रव्यशब्देनात्र विवक्षितं न ततो भेदेन गुणादयो वेदान्तिमते विद्यन्ते। शुक्लः पटः खण्डो गौरित्यादिसामानाधिकरण्यदर्शनात्। द्रव्यमेव तु कल्पनया तत्तदाकारेण भातीत्यभ्युपगमात्। अतो दृष्टान्तासंप्रतिपत्तिरित्यर्थः। विपक्षे दोषमाह—**यदि हीति**। गुणादयो द्रव्यादत्यन्तभिन्ना हिमवद्विन्ध्ययोरिव यदि स्युर्यदि[8] चाऽऽत्मनः सकाशादिच्छादयोऽत्यन्तं भिन्ना भवेयुस्तदा गुणादीनां द्रव्येण तद्वदेव संबन्धानुपपत्तेः। इच्छादीनां चाऽऽत्मना तदयोगात्पारतन्त्र्यासिद्धिरित्यर्थः। अत्यन्तभिन्नानामपि समवायसंबन्धात्पारतन्त्र्योपपत्तिरिति शङ्कते—**अयुतेति**। किमिदमयुतसिद्धत्वमपृथक्कालत्वं किं वा पृथग्देशत्वमुतापृथक्स्वभावत्वं[10]माहो[11]स्वित्संयोगविभा[12]गायोग्यत्वम्। नाऽऽद्यः। विकल्पासहत्वात्। किमिच्छाद्यपेक्षयाऽपृथक्कालत्वं किं वाऽऽत्मापेक्षयेच्छादीनामिति विकल्प्याऽऽद्यं दूषयति—**नेत्यादिना**। यद्यात्मना सहापृथक्कालत्वमिच्छादीनां तदाऽऽत्मनोऽनादित्वात्तद्गतमहत्त्ववन्नित्यत्वं तेषामापततीत्याह—**आत्मनेति**। प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे—**स चेति**।

**समवायस्य च द्रव्यादन्यत्वे सति द्रव्येण संबन्धान्तरं वाच्यं यथा द्रव्यगुणयोः। समवायो नित्यसंबन्ध एवेति न[13] वाच्यमिति चेत्तथा च समवायसंबन्धवतां नित्यसंबन्धप्रसङ्गात्पृथक्त्वानुपपत्तिः। अत्यन्तपृथ-**

१ ख. °गादस°। २ ख. ग. झ. °त्युत्पत्ति°। ३ ग. झ. °गादक°। ४ क. °मुत्पत्तिबुद्धिसं°। ५ ग. °स्य त्वात्म°। ६ ख. °वादि°। ७ क. सिध्यति। ८ ग. छ. झ. °दि वाऽऽत्म°। ९ क. °तन्त्र्यसि°। १० ग. °त्वमहो संयो°। ११ छ. झ. °हो संयो°। १२ झ. °भागयो°। १३ ख. ङ. झ. न च वा°।

क्त्वे[1] च द्रव्यादीनां स्पर्शवदस्पर्शद्रव्ययोरिव षष्ठ्यर्थानुपपत्तिः। इच्छाद्युपजना[2]पायवद्गुणवत्त्वे[3] चाऽऽत्मनोऽनित्यत्वप्रसङ्गः। देहफलादिवत्साव[4]यवत्वं विक्रियावत्त्वं च देहादिवदेवेति दोषावपरिहार्यौ[5]। यथा[6] त्वाकाशस्याविद्या[7]ध्यारोपितरजोधूममलत्वादिदोषवत्त्वं तथा[8]ऽऽत्मनोऽविद्याध्यारोपितबुद्ध्याद्युपाधिकृतसुखदुःखादिदोषवत्त्वे बन्धमोक्षादयो[9] व्यावहारिका न विरुध्यन्ते। सर्ववादिभिरविद्या[10]कृतव्यवहाराभ्युपगमात्परमार्था[11]नभ्युपगमाच्च। तस्मादात्मभेदपरिकल्पना वृथैव तार्किकैः क्रियत[12] इति ॥ ९ ॥

न चापृथग्देशत्वमयुतसिद्धत्वम्। तन्तुपटादीनां पृथग्देशानामयुतसिद्ध्यभावप्रसङ्गात्। न चापृथक्स्वभावत्वमयुतसिद्धत्वम्। भेदपक्षपरिक्षयात्। न च संयोगविभागा[13]योग्यत्वमयुतसिद्धत्वम्। देवदत्तस्य हस्तादीनां चायुतसिद्ध्यभावापातादित्यभिप्रेत्य समवायस्य द्रव्या[14]दन्य[15]त्वे तावन्मात्रत्वेन तत्संबन्धत्वव्याघातात्[16]ततोऽन्यत्वेन[17] संबन्धान्तरमस्ति न[18] वेति विकल्प्याऽऽद्ये स्यादनवस्थेति मत्वाऽऽह—**समवायस्येति**। द्वितीयं शङ्कते—**समवाय इति**। न वाच्यं संबन्धान्तरमिति शेषः। समवायस्य नित्यसंबन्धत्वे समवायवतां द्रव्यगुणादीनामपि त[19]द्वत्त्वाद्भेदस्य कदाचिदप्यनुपलम्भात्पृथक्त्वप्रथानुपपत्तिरिति दूषयति—**तथा चेति**। संयोगस्यापि समवायसाम्यं चकारेण सूच्यते। समवायस्य समवायिभिर्गुणादीनां च द्रव्येणात्यन्तभेदे हिमवद्विन्ध्ययोरिव संबन्धानुपपत्ते[20]स्तेषु परतन्त्रताव्यवहारासिद्धिरित्याह—**अत्यन्तेति**। किं चेच्छादयो नाऽऽत्मगुणा उपजनापायवत्त्वाद्रूपादिवत्। यद्वाऽऽत्मा नानित्यगुणवान्नित्यत्वाद्व्यतिरे[21]केण देहादिवदित्याह—**इच्छादीति**। न केवलमात्मनोऽनित्यगु[22]णत्वेऽनित्यत्वप्रसक्तिरेव[23] दोषः। किं त्वन्यदपि दोषद्वयं दुष्परिहरमिति बाधकान्तरमाह—**सावयवत्वमिति**। यद्यात्मनो नेच्छादिगुणवत्त्वं तदा तस्य[24] बन्धाभावान्मोक्षो न स्यादतो बन्धमोक्षव्यवस्थानुपपत्त्या प्रतिदेहं सुखदुःखादिविशिष्टात्मभेदसिद्धिरित्याशङ्क्याऽऽह—**यथा त्विति**। अवस्तुत्वादविद्यायास्तत्कृतव्यवहारायोगा[25]द्व्यावहारिकबन्धाद्यभ्युपगमासिद्धिरित्याश-

---

१ च. 'क्त्वेन च द्र'। छ. 'क्त्वे द्र'। २ ङ. 'जनना'। ३ घ. 'त्त्वे वाऽऽत्म'। ज. 'त्त्वेनाऽऽत्म'। ४ ख. घ. ज. 'त्वं क्रि'। ५ च. 'यौं स्याताम्। य'। ६ च. 'थाऽऽका'। ७ ज. 'द्यारो'। ८ ख. 'था चाऽऽत्म'। ९ क. 'यो व्यव'। १० झ. 'विद्यया कृ'। ११ ङ. 'र्थानीत्युप'। १२ ज. क्रियन्त। १३ झ. 'भागयो'। १४ छ. 'व्यानन्य'। १५ ग. झ. 'न्यत्वं ता'। १६ ग. झ. 'तान्न ततोऽ'। १७ ङ. छ. झ. 'त्वे तेन। १८ छ. न चेति। १९ ग. झ. तावत्। २० ग. झ. 'पत्तिः। ते'। २१ छ. 'के दे'। २२ ग. छ. ज. झ. 'णवत्त्वेऽनि'। २३ छ. 'त्वदोषप्र'। २४ घ. 'स्य संब'। २५ क. 'गाद्व्यव'।

क्षयाऽऽह—**सर्ववादिभिरिति** । अविद्याकृतमनुष्यत्वा[1]ध्यारोपेण लौकिकवैदिकव्यव-हा[2]रः सर्ववादिभिरिष्य[3]ते तत्कृता च व्यवस्थाऽऽस्थीयते । तस्मादस्माकमपि त[4]थैव सर्व-मविरुद्धमित्यर्थः । परमार्थे च मोक्षे केनापि वादिना व्यवहारो नाभ्युपगम्यते । तथा च मोक्षे परेषां व्यवहारस्यैवाभावात्तन्निर्वाहकपारमार्थिकभेदाभ्युपगमो वृथेत्याह—**परमार्थेति** । कल्पितभेदवशादपि पूर्वोक्तसर्वव्यवस्थासौस्थ्यात्पारमार्थिकात्मभेदकल्पना प्रमाणप्रयोजनशून्येत्युपसंहरति—**तस्मादिति** ॥ ५ ॥

**रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै ।**
**आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः ॥६ ॥**

कथं पुनरात्मभेदनिमित्त इव व्यवहार एकस्मिन्नात्मन्यविद्याकृत उपपद्यत इति । उच्यते । यथेहाऽऽकाश एकस्मिन्घटकरकापवरकाद्याका-शानामल्पत्वमहत्त्वादिरूपाणि भिद्यन्ते तथा कार्यमुदकाह[5]रणधारणशय-नादिसमाख्याश्च घटाकाशकरकाकाश इत्याद्यास्तत्कृताश्च भिन्ना[6] दृश्यन्ते । तत्र त[7]त्रे[8] वै[9] व्यवहारविषय इत्यर्थः । सर्वोऽयमाका[10]शे रूपादि-[11]भेदकृतो व्यवहारो न परमार्थ[12] एव । परमार्थतस्त्वाकाशस्य न भेदोऽस्ति । न चाऽऽका[13]शभेदनिमित्तो व्यवहारोऽस्त्यन्तरेण परोपाधि-कृतं द्वारम् । यथैतत्तद्वद्देहोपाधिभेदकृतेषु जीवेषु घटाकाशस्थानीयेष्वा-त्मसु निरूपणा[14]त्कृतो बुद्धिमद्भिर्निर्णयो निश्चय इत्यर्थः ॥ ६ ॥

अद्वैतस्य श्रुत्या[15]दिविरोधाभावेऽप्यनुमानविरोधमाशङ्क्यानैकान्तिकत्वेनानुमानं दूष-यति—**रूपेति** । श्लोकव्यावर्त्यामाशङ्कामाह—**कथमिति** । यथाऽऽत्मभेदवादे तद्भेद-[16]निमित्तो रूपादिव्यवहारस्तथैकस्मिन्नेवाऽऽत्मन्यात्मैक्यपक्षे रूपादिव्यवहारो नोपप-द्यते । तथा च विमता जीवास्तत्त्वतो भिद्यन्ते भिन्ननामकत्वाद्भिन्नकार्यकरत्वाद्भिन्नरू-पत्वा[17]द्घटपटादिवदित्यनुमानविरुद्धमद्वैतमित्यर्थः । घटाकाशादिष्वनैकान्तिकत्वं विव-[18]क्षित्वा श्लोकाक्षराणि व्युत्पादयति—**उच्यत इत्यादिना** । शयनादि[19]समाख्याश्च भिद्यन्त इति संबन्धः । तत्कृताश्चेत्यत्र तच्छब्देन वि[20]कल्पितो घटा[21]काशभेदो गृह्यते ।

---

१ ग. छ. झ. °त्वाद्यध्या° । २ घ. ङ. ज. °हाराः स° । ३ घ. ङ. ज. °ष्यन्ते त° । ४ ग. झ. तद्वदेव । ५ क. °तव्य° । ६ घ. ज. °रणादि श° । ७ क. °न्नाश्च दृ° । ८ घ. ङ. छ. ज. तत्रैव व्य° । ९ च. झ. °त्र व्य° । १० क. °काशरू° । ११ च. °दिकृ° । १२ च. °र्थत ए° । १३ छ. °काशे भे° । १४ च. झ. °णा कृताबु° । १५ छ. °त्या वि° । १६ ग. छ. झ. °दि भे-दव्य° । १७ ग. छ. झ. °त्वाच्च घट° । १८ क. °क्षितत्वात् । श्लो° । १९ ख. ग. घ. ङ. °दि भि-द्यत इ° । ज. °दिभिर्भिद्य° । २० ग. विकल्पतो । २१ घ. °टाद्याका° ।

चकारोऽवधारणार्थः । घटाकाशादीनामुक्तहेतु[1]त्वेऽपि विपक्षत्वाभावे कथमनैकान्तिकत्वमित्याशङ्क्याऽऽह—सर्वोऽयमिति । उक्तेऽर्थे तृतीयं[2] पादं विभजते—न चेति[3] । परोपाधिशब्देन घटकरकादिरुच्यते । दृष्टान्तमनूद्य दार्ष्टान्तिकं व्याचष्टे—यथैतदित्यादिना ॥ ६ ॥

**नाऽऽकाशस्य घटाकाशो विकारावयवौ यथा ।**
**नैवाऽऽत्मनः सदा जीवो विकारावयवौ तथा ॥ ७ ॥**

**ननु तत्र परमार्थकृत एव घटाकाशादिषु रूपकार्यादिभेदव्यवहार इति[4] । नैतदस्ति । यस्मात्परमा[5]र्थाकाशस्य घटाकाशो न विकारः । यथा सुवर्णस्य रुचकादिर्यथा[6] वाऽपां फेनबुद्बुदहिमा[7]दिः । नाप्यवयवो यथा[8] वृक्षस्य शाखादिः । न तथाऽऽकाशस्य घटाकाशो[9] विकारावयवौ[10] यथा तथा नैवाऽऽत्मनः परस्य परमार्थसतो महाकाशस्थानीयस्य घटाकाशस्थानीयो जीवः सदा सर्वदा यथोक्तदृष्टान्तवन्न विकारो नाप्यवयवः । अत आत्मभेदकृतो व्यवहारो मृषैवेत्यर्थः ॥ ७ ॥**

घटाकाशादीनां विपक्षत्वाभावमाशङ्क्य परिहरति—नेत्यादिना । घटाकाशादिराकाशस्य विकारोऽवयवो वेत्यङ्गीकारात्तत्रापि भेदस्य तात्त्विकत्वान्न विपक्षतेति श्लोकस्य व्यावर्त्यं चोद्यमुत्थापयति—नन्विति । आकाशस्य निर्विका[11]रत्वं निरवयवत्वं च लोकसिद्धं गृहीत्वा परिहरति—नैतदस्तीति । तत्र वैधर्म्यो[12]दाहरणद्वयमाह—यथेति । घटाकाशादिराकाशाख्यस्य महाकाशस्यावयवो न भवतीत्यत्र व्यतिरेकदृष्टान्तमाह—यथा वृक्षस्येति । उक्तदृष्टान्तानां दार्ष्टान्तिकमाह—न तथेति । घटाकाशस्य महाकाशं प्रति विकारत्वमवयवत्वं च नास्तीत्युक्तं दृष्टान्तत्वेनानूद्य दार्ष्टान्तिकं दर्शयन्नुत्तरार्धं व्याकरोति—यथेत्यादिना । अनैकान्तिकत्वेनानुमानस्याप्रमाणत्वे स्थिते फलितमाह—अत इति ॥ ७ ॥

**यथा भवति बालानां गगनं मलिनं मलैः ।**
**तथा भवत्यबुद्धानामात्माऽपि मलिनो मलैः ॥ ८ ॥**

---

१ ख. ग. ङ. छ. ज. °तुमत्त्वे वि° । २ ङ. ज. °तीयपा° । ३ ग. झ. °ति । अन्तरेणोपा° । ४ च. °ति चेत्तन्नेत्याह नेति नै° । ५ च. °माका° । ६ ख. घ. ङ. ज. झ. °दि यथा । ७ ख. घ. ङ. छ. °मादिनाऽप्य° । ८ क. °था च वृ° । ९ ज. °काशौ वि° । १० घ. °यवो य° । ११ ज. °कारत्वं च लो° । १२ ग. °धर्म्यौदा° ।

१५

**यस्माद्यथा घटाकाशादिभेदबुद्धिनिबन्धनो रूपकार्या[1]दिभेदव्यवहार-स्तथा देहोपाधिजीवभेदकृतो जन्ममर[2]णादिव्यवहा[3]रस्तस्मात्तत्कृतमेव क्लेशकर्मफलमलवत्त्वमात्मनो न परमार्थत इत्ये[4]तमर्थं दृष्टान्तेन प्रतिपि[5]-पाद[6]यिषन्नाह—यथा भवति लोके बालानामविवेकिनां गगनमाकाशं घनरजोधूमादिमलैर्मलिनं मलवन्न ग[7]गनं मलव[8]द्याथात्म्यविवेकिनाम्, तथा भवत्यात्मा परोऽपि यो विज्ञाता प्रत्यक्क्लेशकर्मफलम[9]लैर्मलिनोऽ-बुद्धानां प्रत्यगात्मविवेकरहितानां नाऽऽत्मविवेकवताम्। न ह्यू[10]षरदेश-स्तृड्वत्प्राण्यध्यारोपितोदकफेनतरङ्गादिमांस्तथा नाऽऽत्माऽबु[11]धारोपित-क्लेशादिमलैर्मलिनो भवतीत्यर्थः ॥ ८ ॥**

जीवो ब्रह्मणो नांशो न विकारोऽपि तु ब्रह्मैवोपाध्यनुप्रविष्टं जीवशब्दितमित्युक्तं तदयुक्तं ब्रह्मणः शुद्धत्वाज्जीवस्य रागादिमल[12]वत्त्वा[13]दनेकत्वायोगादित्याशङ्क्य परमा-र्थतो जीवस्यापि नास्ति म[14]लवत्त्वमित्याह—**यथेति**। श्लोकस्य तात्पर्यमाह—**यस्मा-दिति**। घटाकाशो म[15]ठाकाशः सूचीपाशाकाशश्चेत्युपाधिनिमित्तो भेदस्तद्विषया बुद्धि-स्तत्प्रयुक्तो रूपभेदोऽर्थक्रियाभेदो नामभेदश्चेति व्यवहारो नभसि यथोपलभ्यते तथा देहाद्युपाधिभेदप्रयुक्तो जीवभेदस्तत्कृतो जननमरणसुखदुःखादिव्यवहारो व्यवस्थितो यस्मादास्थीयते तस्मात्ते[16]नाविद्याविद्यमानेन कृतमेवाऽऽत्मनो रागादिम[17]लवत्त्वं न वस्तुतोऽ-स्तीत्येतमर्थं दृष्टान्तद्वारा प्र[18]तिपिपादयिषन्नादौ दृष्टान्तमाहेति योजना। दृष्टान्त-भागनिविष्टा[19]न्यक्षराणि व्याचष्टे—**यथेत्यादिना**। दार्ष्टान्तिकभागगतानामक्षराणा-मर्थमाह—**तथेति**। यो हि प्रत्यगात्मा विज्ञाता सोऽप्यबुद्धानां मलिनो भवतीति संबन्धः। अबुद्धानामित्येतद्व्याचष्टे—**प्रत्यगात्मेति**। अविवेकिभिरध्यारोपितेऽपि प्रत्यगात्मनो मलवत्त्वे मलप्रयुक्तं फलं तत्र वास्तवं भविष्यतीत्याशङ्क्याऽऽह—**न हीति** ॥ ८ ॥

**मरणे संभवे चैव गत्यागमनयोरपि।**
**स्थितौ सर्वशरीरेषु[20] आकाशेनाविलक्षणः ॥ ९ ॥**

---

१ झ. °र्याभे° । २ च. झ. °रणभेदव्य° । ३ झ. °हारो यस्मा° । ४ च. °त्यनेम° । ५ च. छ. झ. °तिपा° । ६ च. छ. झ. °यिष्यन्ना° । ७ क गमनं । ८ क. °वत्तया° । झ. °वत् । यथा-त्मवि° । ९ ज़. °मलिनैर्म° । १० ख. घ. ङ. च. झ. °ह्यूखर° । ११ च. °वुद्ध्यारो° । १२ घ. °लत्वाद° । १३ छ. झ. °त्त्वादेकत्वा° । १४ क. °लत्वमि° । १५ ग. ज. झ. महाका° । १६ ग. °नाविद्य° । १७ क. °लत्वं न । १८ ग. घ. °तिपा° । १९ ग. झ. °ष्टाक्ष° । २० झ. °षु ह्याका° ।

पुनरप्युक्तमेवार्थं प्रपञ्चयति—घटाकाशजन्मनाशगमनागमनस्थितिवत्सर्वशरीरेष्वात्मनो जन्ममरणादिराकाशेनाविलक्षणः प्रत्येतव्य इत्यर्थः ॥ ९ ॥

ननु जीवो मरणानन्तरं धर्मानुरोधेन स्वर्गं गच्छति । अधर्मवशाच्च नरकं प्रतिपद्यते । धर्माधर्मयोश्च भोगेन क्षये पुनरागत्य योनिविशेषे संभवति । तत्र यावद्भोगं स्थित्वा पुनरपि परलोकाय प्रतिष्ठते । एवमिहलोकपरलोकसंचरणव्यवहारविरुद्धमद्वैतमिति तत्राऽऽह—**मरण इति**। श्लोकस्य तात्पर्यमाह—**पुनरपीति**। आत्मनि सर्वो व्यवहारोऽविद्याकृतो वास्तवो नेत्युक्तोऽर्थः । आत्मनो हि गगनोपमस्य गत्यादेर्वस्तुतोऽसंभवादविद्याकृतस्तस्मिन्गत्यादिरित्यर्थः ॥ ९ ॥

**संघाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः ।**
**आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥१०॥**

घटादिस्थानीयास्तु देहादिसंघाताः स्वप्नदृश्यदेहादिवन्मायाविकृतदेहादिवच्चाऽऽत्ममायाविसर्जिता आत्मनो मायाऽविद्या तया प्रत्युपस्थापिता न परमार्थतः सन्तीत्यर्थः । यद्याधिक्यमधिकभावस्तिर्यग्देहाद्यपेक्षया देवादिकार्यकारणसंघातानां यदि वा सर्वेषां समतैव नैषामुपपत्तिः संभवः सद्भावप्रतिपादको हेतुर्विद्यते । नास्ति हि यस्मात्तस्मादविद्याकृता एवं न परमार्थतः सन्तीत्यर्थः ॥ १० ॥

ननु संघातशब्दितानामुपाधीनां सत्यत्वात्तत्प्रयुक्तभेदस्यापि तथात्वादद्वैतानुपपत्तितादवस्थ्यमिति चेत्तत्राऽऽह—**संघाता इति**। देवादिदेहानां पूज्यतमत्वेनाऽऽधिक्याभ्युपगमान्नासत्यत्वसिद्धिरित्याशङ्क्य देहभेदेषु[11] केषुचिदाधिक्ये मूढदृष्ट्या कल्पितेऽपि [12]विवेकदृष्ट्या सर्वदेहानां[13] पञ्चभूतात्मकत्वाविशेषा[14]दशेषसाम्ये वा स्वीकृते नास्ति संघातेषु[15] सत्यत्वे काचिदुपपत्तिरित्याह—**आधिक्य इति**। पूर्वार्धाक्षराणि[16] योजयति—**घटादीति**। मणिमन्त्रा[17]दिरूपां मायामिन्द्रजालप्रयोजकभूतां व्यावर्तयति—**अविद्येति**। विमता देहा न सत्या देहत्वात्संप्रतिपन्नवदित्यर्थः । ब्रह्मादिदेहानामुत्कृष्टत्वान्नाविद्या[18]कृतत्वमित्याशङ्क्य द्वितीयार्धं व्याचष्टे—**यदीत्यादिना** ॥ १० ॥

---

१ झ. °नरुक्तमे°। २ ख. सर्वव्य°। ३ झ. °त्युक्तार्थः। ४ क. °विवर्जि°। ५ क. °पेक्षाया। ६ क. °र्यैकर°। ७ क. ख. ग. °पत्तिसं°। ८ झ. °स्ति य°। ९ क. °व प°। १० झ. °त्तिस्तद°। ११ क. झ. °षु चि°। १२ ग. झ. °वेकिदृ°। १३ ख. °हा प°। १४ ज. °षादिशे°। १५ ख. छ. °षु पुनः स°। १६ छ. °णि व्याचष्टे-घ°। १७ ज. °मन्त्ररू°। १८ झ °कृतमि°।

**रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके ।**
**तेषामात्मा परो जीवः[1] खं यथा संप्रकाशितः ॥११॥**

उत्पत्त्यादिवर्जितस्याद्वयस्या[2]स्याऽऽत्मतत्त्वस्य श्रुतिप्रमाणै[3]कत्वप्रदर्शनार्थं वाक्यान्युपन्यस्यन्ते । रसादयोऽन्नरसमयः प्राणमय इत्येवमादयः कोशा इव कोशा अस्यादेरिवोत्तरोत्तरस्यापेक्षया बहिर्भावात्पूर्वपूर्वस्य[4] व्याख्याता विस्पष्टमाख्यातास्तैत्तिरीयके[5] तैत्तिरीयकशाखोपनिषद्वल्ल्यां[6] तेषां कोशानामात्मा येनाऽऽत्मना पञ्चापि कोशा आत्मवन्तोऽन्तरतमेन[7] । स हि सर्वेषां जीवननिमित्तत्वाज्जीवः । कोऽसावित्याह । पर एवाऽऽत्मा यः पूर्वम् "सत्यं ज्ञानमनन्तं ब्रह्म" इति प्रकृतः । यस्मादात्मनः स्वप्नमायादिवदाकाशादिक्रमेण रसादयः कोशलक्षणाः[8] संघाता आत्ममायाविसर्जिता इत्युक्तम् । स आत्माऽस्माभिर्यथा खं तथेति[9] संप्र[10]काशित आत्मा ह्याकाशवदित्यादि[11]श्लोकैः । न तार्किकपरिकल्पितात्मैव[12]त्पुरुषबुद्धिप्रमाणगम्य इत्यभिप्रायः ॥ ११ ॥

जीवस्याद्वितीयब्रह्मत्वमुपपत्त्यवष्टम्भेनोपपादितम् । इदानीं तत्रैव तैत्तिरीय[13]श्रुतेस्तात्पर्यमाह—**रसादयो हीति** । श्लोकस्य तात्पर्यमाह—**उत्पत्त्यादीति** । अक्षरार्थं कथयति—**रसादय इति** । आदिशब्देन मनोमयविज्ञानमया[14]नन्दमया गृह्यन्ते । खड्गादेर्यथा कोशास्तदपेक्षया बहिर्भवन्ति तद्वदेते पञ्च कोशा व्यपदिश्यन्ते । तत्र हेतुमाह—**उत्तरोत्तरस्येति** । पूर्वपूर्वस्यान्नमयादेरुत्तरोत्तरप्राणमयाद्यपेक्ष[15]या बहिर्भावाद्ब्रह्म सर्वान्तरं प्रतिष्ठाभूतमपेक्ष्याऽऽनन्दमयस्यापि बहिर्भावाविशेषादविशिष्टं पञ्चानामपि कोशत्वमित्यर्थः । अवशिष्टान्यक्षराणि व्याचष्टे—**व्याख्याता इत्यादिना** । तत्र जीवशब्दप्रवृत्तिं व्युत्पादयति—**स हीति** । विशिष्टं जीवशब्दार्थमाकाङ्क्षाद्वारा व्यावर्तयति—**कोऽसावित्यादिना** । प्रकर[16]णाविच्छे[17]दनार्थं प्रकरणमनुसंधत्ते—**यस्मादिति** । प्रकृतस्य परस्याऽऽत्मनः श्रौतत्वे फलितमाह—**नेत्यादिना** ॥ ११ ॥

**द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम् ।**
**पृथिव्यामुदरे चैव यथाऽऽकाशः प्रकाशितः ॥ १२ ॥**

---

१ च. °वः स यथा खं प्र° । २ च. झ. °स्याऽऽत्म° । ३ च. °णत्व° । ४ क. °र्वस्य व्या° । ख. ङ. ज. झ. °र्वस्य पू° । ५ क. °यकशा° । ६ झ. °षद्ब्रह्मवल्ल्यां । ७ झ. °न्तरात्मना स° । ८ छ. °क्षणसं । ९ झ. °ति प्र° । १० च. संप्रकाशः । ११ ख. घ. ङ. ज. °दिभिः श्लो° । १२ झ. °त्मपुरु° । १३ ख. छ. °यकश्रु° । १४ ज. °या गृ° । १५ क. °क्ष्यया ब° । १६ क. °रणवि° । १७ च. छ. झ. °च्छेदार्थं ।

किं चाधिदैवमध्यात्मं च तेजोमयोऽमृतमयः पुरुषः पृथिव्याद्यन्तर्गतो यो विज्ञाता पर एवाऽऽत्मा ब्रह्म सर्वमिति द्वयोर्द्वयोरा द्वैतक्षयात्परं ब्रह्म प्रकाशितम्। क्वेत्याह। ब्रह्मविद्याख्यं मध्वमृतममृतत्वं मोदनहेतुत्वाद्विज्ञायते यस्मिन्निति मधुज्ञानं मधुब्राह्मणं तस्मिन्नित्यर्थः। किमिवेत्याह। पृथिव्यामुदरे चैव यथैक आकाशोऽनुमानेन प्रकाशितो लोके तद्वदित्यर्थः ॥ १२ ॥

मनुष्योऽहं प्राण्यहं प्रमाताऽहं कर्ताऽहं भोक्ताऽहमिति पञ्चानां विशिष्टानां यदेकं स्वरूपमनुगतं प्रत्यक्चैतन्यं तद्ब्रह्मैवेति जीवपरयोरैक्ये तैत्तिरीयश्रुतेस्तात्पर्यमुक्त्वा तत्रैव बृहदारण्यकश्रुतेरपि तात्पर्यमाह—**द्वयोरिति**। मधुब्राह्मणे बहुषु पर्यायेष्वधिदैवाध्यात्मविभक्तयोः स्थानयोरयमेव स इति परं ब्रह्म प्रत्यक्प्रकाशितम्। अतोऽस्मिन्बृहदारण्यकश्रुतेरपि ब्रह्मात्मैक्ये तात्पर्यमित्यर्थः। तत्र दृष्टान्तमाह—**पृथिव्यामिति**। न केवलमैक्ये तैत्तिरीयश्रुतेरेव तात्पर्यं किं तु बृहदारण्यकश्रुतेरपीत्याह—**किं चेति**। अधिदैवं पृथिव्यादावध्यात्मं च शरीरे तेजोमयो ज्योतिर्मयश्चैतन्यप्रधानोऽमृतमयोऽमरणधर्मा पुरुषः पूर्णः पृथिव्यादौ शरीरे चान्तर्गतो यो विज्ञाता स पर एवाऽऽत्मा। तेन स विज्ञाता सर्वं पूर्णमपरिच्छिन्नं ब्रह्मैवेति परं ब्रह्म प्रकाशितमिति संबन्धः। अपवादावस्थायामध्यारोपासंभवाद्द्वयोर्द्वयोरिति कथमुच्यते तत्राऽऽह—**आ द्वैतक्षयादिति**। द्वैतक्षयपर्यन्तं ब्रह्म प्रकाशितम्। द्वयोर्द्वयोरिति पुनरनुवादमात्रमित्यर्थः। मधुज्ञाने मध्वेव प्रकाशितं न ब्रह्मेत्याशङ्क्य मधुज्ञानशब्दार्थं व्युत्पादयति—**क्वेत्यादिना**। शब्दस्य क्वचिदाश्रितत्वं रूपवदनुमीयते। तच्च शब्दाधिकरणं सामान्यतः सिद्धं पारिशेष्यादाकाशमिति सिद्धमिति। तच्च कल्पनालाघवादेकमेवेति गम्यते। तथा च बहिरन्तश्चैकमेवाऽऽकाशमनुमानप्रामाण्यादधिगतम्। तथाऽधिदैवमध्यात्मं च ब्रह्म प्रत्यग्भूतं सिद्धमित्युत्तरार्धं व्याचष्टे—**किमे(मि)वेत्यादिना** ॥ १२ ॥

**जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते।**
**नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम् ॥ १३ ॥**

---

१ क. °योरद्वै°। २ ङ. छ. °त्परब्र°। ३ च. °मृतं मो°। ४ ज. °ते तस्मि°। ५ ग. घ. °हं क°। ६ ग. घ. झ. °देकस्व°। ७ ख. °यकश्रु°। ८ घ. °क्त्वा बृ°। ९ घ. °ण्यश्रु°। १० घ. परब्र°। ११ ग. ङ. ज. झ. °त्यग्भूतं प्रका°। १२ ज. ब्रह्मैक्ये। १३ ज. °लमात्मैक्ये। १४ ख. °यकश्रु°। १५ क. °श्रुतिरे°। १६ घ. °रध°। १७ ग. °र्णः सन्पृथि°। १८ ख. छ °र्वं परिपू°। १९ ख. °ह—अद्वै°। २० झ. °ने ब्रह्मे°। २१ घ. ङ °काशते न। २२ छ. °शङ्कयाऽऽह म°। २३ घ. ङ. ज. °द्धं परिशेषादा°। २४ घ. ज. °ण्याधि°। २५ घ. °म्। यथाऽ°। २६ च. °देव हि।

यद्युक्तितः श्रुतितश्च निर्धारितं जीवस्य परस्य चाऽऽत्मनो[1] जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते स्तूयते शास्त्रेण व्यासादिभिश्च । यच्च सर्वप्राणिसाधारणं स्वाभाविकं शास्त्रबहिष्कृतैः कुतार्किकैर्विरचितं नानात्व[2]दर्शनं[3] निन्द्यते "न तु तद्द्वितीयमस्ति"[4]। "द्वितीयाद्वै भयं भवति"। "उदरमन्तरं कुरुते । अथ तस्य भयं भवति" । "इदं सर्वं यदयमात्मा" । "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिवाक्यैश्चान्यैश्च ब्रह्मविद्भिः । यच्चैतत्तदेवं[5] हि समञ्जसमृज्ववबोधं न्याय्यमित्यर्थः । यास्तु[6] तार्किकपरिकल्पिताः कुदृष्टयस्ता अनृज्व्यो निरूप्यमाणा[7] न घटनां[8] प्राश्नन्तीत्यभिप्रायः ॥ १३ ॥

इतश्चैकत्वे श्रुतीनां तात्पर्यमित्याह—**जीवात्मनोरिति** । अभेदेन ब्रह्म वेद ब्रह्मैव भवतीत्यादिना ब्रह्मभावफलवादेनेत्यर्थः । यत्प्रशस्यते तद्विधेयमित्यादिन्यायादेकत्वदर्शने फलवादोपपत्त्युपलम्भादेकत्वं प्रशस्तत्वाद्विवक्षितमिति भावः । यच्चानेकत्वं सर्वप्राणिसाधारणं तन्निन्द्यमानं दृश्यते । यन्निन्द्यते तन्निषिध्यत इति न्यायान्नानात्वं शास्त्रार्थो न भवतीत्याह—**नानात्वमिति** । तदुभयमेकत्वप्रशंसनं नानात्वं[10]निन्दनं चैकत्वमेव[11] शास्त्रीयमित्यभ्युपगमे सति युक्तमिति फलितमाह[12]—**तदेवं हीति** । श्लोकाक्षराणि व्याचष्टे—**यदिति** । अनन्यत्वभावशङ्कां व्यावर्त्यैकरसत्वं दर्शयति—**अभेदेनेति** । तत्प्रशस्यते शास्त्रेणेति तत्पदमादाय व्याख्येयम् । शास्त्रेणाभेदवेदनेन फलवादेनेत्यर्थः । व्यासपराशरादिभिश्च वेदार्थं व्याचक्षाणैरेकत्वं[13] स्तूयते "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः"। "अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम्" इत्यादिवाक्यैरित्याह—**व्यासादिभिश्चेति*** । द्वितीयार्धं विभजते—**यच्चेति** । तन्निन्द्यत इति यच्छब्देनोपक्रमाद्[14]द्रष्टव्यम्। "अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः"। "किं तेन न कृतं पापं चोरेणाऽऽत्मापहारिणा" इत्यादिवाक्यैर्व्यासादयोऽपि द्वैतदर्शनं निन्दन्तीत्याह—**अन्यैश्चेति** । एवमनेकत्व[15]दर्शनस्य निन्दितत्वेन निषिद्धत्वान्नानेकत्वं शास्त्रीयमित्युक्त्वा चतुर्थपादार्थमाह—**यच्चैतदिति** । विषयभेदेन प्रशंसनं निन्दनं

---

* एतत्पुरतः—"सकलमिदमहं च वासुदेव इति । सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहमित्यादि" इत्यधिकं ङ. पुस्तके ।

---

१ क. छ. झ. °नोर° । घ. ङ. °नोर्जीवा° । २ झ. °नात्वं द° । ३ झ. °नं तन्निन्द्य° । ४ ख. °तीयं द्वि° । ५ च. °देव हि । ६ च. यस्तु । ७ घ. °माना न घटीः प्रा° । ८ क. ज. घटानां । ९ ग. ङ. ज. झ. °र्यमाह—। १० छ. °त्वभावनि° । ११ ज. °कत्वं हि शा° । १२ ङ. फलमा° । १३ छ. °त्वं प्रस्तू° । १४ घ. ङ. ज. °मादिति द्रष्ट° । १५ ख. °कद° ।

चेत्यर्थः। **एवं हीति** । द्वैतस्याशास्त्रीयत्वमद्वैतस्यैव तत्तात्पर्यगम्यत्वमित्यङ्गीकारे सतीत्यर्थः। भेददृष्टीनामपि न्याय्यत्वाविशेषाद्भेददर्शनानिन्दनस्य कुतो न्याय्यत्वमित्याशङ्क्याऽऽह—**यास्त्विति** ।

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोमूला हि ताः स्मृताः"

इति मनुवचनादित्यर्थः। न्यायविरोधादपि भेदवादानामसमञ्जसत्वमित्याहे—**निरूप्यमाणा इति**। वैशेषिकवैनाशिकादिकल्पना भेदानुसारिण्यो भेदश्च परस्पराश्रयतादिदोषदूषितो न प्रमीयते । तेन भेदवादानामुत्प्रेक्षामूलानामसमञ्जसतेत्यर्थः॥ १३॥

## जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्तितम्।
## भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते॥१४॥

ननु श्रुत्याऽपि जीवपरमात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेरुत्पत्त्यर्थोपनिषद्वाक्येभ्यः पूर्वं प्रकीर्तितं कर्मकाण्डे। अनेकशः कामभेदत इदंकामोऽदः काम इति। परश्च "स दाधार पृथिवीं द्याम्" इत्यादिमन्त्रवर्णैः। तत्र कथं कर्मज्ञानकाण्डवाक्यविरोधे ज्ञानकाण्डवाक्यार्थस्यैवैकत्वस्य सामञ्जस्यमवधार्यत इति। अत्रोच्यते। "यतो वा इमानि भूतानि जायन्ते"। "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाः"। "तस्माद्वा एतस्मादात्मन आकाशः संभूतः"। "तदैक्षत"। "तत्तेजोऽसृजत" इत्याद्युत्पत्त्यर्थोपनिषद्वाक्येभ्यः प्राक्पृथक्त्वं कर्मकाण्डे प्रकीर्तितं यत्तन्न परमार्थम्। किं तर्हि गौणम्। महाकाशघटाकाशादिभेदवत्। यथौदनं पचतीति भविष्यद्वृत्त्या तद्वत्। न हि भेदवाक्यानां कदाचिदपि मुख्यभेदार्थत्वमुपपद्यते । स्वाभाविकाविद्यावत्प्राणिभेददृष्ट्यनुवादित्वादात्मभेदवाक्यानाम्। इहै चोपनिषत्सूत्पत्तिप्रलयादिवाक्यैर्जीवपरमात्मनोरेकत्वमेव प्रतिपिपादयिषितम्। "तत्त्वमसि" "अन्योऽसावन्योऽहमस्मीति न स वेद" इत्यादिभिः। अत उपनिषत्स्वेकत्वं श्रुत्या प्रतिपिपादयिषितं भविष्यतीति भाविनीमेकवृ-

---

१ क. °दृष्टिताम°। २ ग. झ. °न्दकस्य। ३ छ. °लाः प्रोक्तास्तमो°। ४ घ. ङ. ज. °ह—अनि°। ५ छ. °दिभेदक°। ६ क. °र्थः॥ १३॥ भे°। ७ छ. गौणत्वं मुख्य°। ८ ङ. ज. °त्वं न हि यु°। ९ घ. °क्त्वं प्रागु°। १० ख. घ. ज. °त्पत्तेः, न्युत्प°। ११ ख. झ. °थिवीम्" इ°। घ. ङ. ज. °थिवीं द्यामुतेमाम्" इ°। १२ घ. ङ. ज °त्यादिन्युत्प°। १३ ज. °भ्यः पृथ°। १४ घ. ङ. °मार्थं भविष्यदिति किं। १५ च. इहैवोप°।

**त्तिमाश्रित्य लोके भेददृष्ट्यनुवादो गौण एवेत्यभिप्रायः। अथ वा "तदैक्षत"। "तत्तेजोऽसृजत" इत्याद्युत्पत्तेः प्राक् "एकमेवाद्वितीयम्" इत्येकत्वं प्रकीर्तितम्। तदेव च "तत्सत्यं स आत्मा तत्त्वमसि" इत्येकत्वं भविष्यतीति तां भविष्यद्वृत्तिमपेक्ष्य यज्जीवात्मनोः पृथक्त्वं यत्र क्वचिद्वाक्ये गम्यमानं तद्गौणम्। यथौदनं पचतीति तद्वत् ॥ १४ ॥**

न भेदवादानामुत्प्रेक्षा[1]मात्रमूलत्वं श्रुति[2]मूलत्वादित्याश[3]ङ्क्य परिहरति—**जीवात्मनोरिति**। उत्पत्तिर्व्युत्पत्तिः सम्यग्ज्ञानं तदर्थोपनि[4]षदां प्रवृत्त्य[5]पेक्षया प्राक्प्रवृ[6]त्तकर्मका[7]ण्डेन यत्परापरयोर्नानात्वमुक्तं तदोदनं पचतीति भवि[8]ष्यत्प्रवृत्त्या तण्डुलेष्वोदनत्ववद्गौणमेव न मुख्यभेदार्थत्वं श्रुतेर्युज्यते । भेदस्यापूर्वत्वपुरुषार्थत्वयोरभावादित्यर्थः। श्लोके[9]ऽव्यावर्त्यामाशङ्कामाह—**नन्विति**। न केवलमस्माभिरुत्प्रेक्षितमिदं किं तु श्रुत्याऽपि दर्शितमित्य[10]पेरर्थः । [11]भेदं वदन्त्याः श्रुतेस्तात्पर्यलिङ्गमभ्यासं सूचयति—**अनेकश इति**। कर्मकाण्डे तत्तत्कामनाभेदेन नियोज्यभेदसिद्धावपि कथं जीवपरयोर्भेदः सिध्यति प[12]रस्य तत्रानुक्तत्वादित्याशङ्क्याऽऽह—**परश्चेति**। हिरण्यगर्भः समवर्तताग्र इति मन्त्रे प्रकृतो हिरण्यगर्भः सर्वनाम्ना परामृश्यते । [13]स इमां पृथिवीं द्यामपि धृतवान्। अन्यथा गुरुत्वात्तयोरवस्थानायोगात्। न च हिरण्यगर्भातिरिक्तमीश्वरं परं बुध्यन्ते मन्त्रवर्णाः। परश्च प्रकीर्तित इति संबन्धः। कर्मकाण्डा[14]र्थं ज्ञानकाण्डेनापबाध्य[15] ज्ञानकाण्डार्थस्यैवैकत्वस्य सामञ्जस्यमवधार्यतामित्याशङ्क्य बाध्यबाधकभावनिर्धारणे कारणानवधारणान्नैवमित्याह—**तत्रेति**। श्लोकाक्षरैरुत्तरमाह—**अत्रेत्यादिना**। पृथक्त्वस्य गौणत्वे प्रागुक्तमेव दृष्टान्तमाह—**महाकाशेति** । तत्रैव श्लोकसूचितमुदाहरणमाह—**यथेति**। मुख्यत्वं हीत्यादि व्याचष्टे—**न हीति**। भेदस्यापूर्वत्वाद्यभावान्न वाक्यानां तत्प[16]रत्वं तत्परातत्परयोश्च तत्प[17]रं वाक्यं बलवदिति न्यायादखण्डवाक्यार्थस्यैव सामञ्जस्यमित्यर्थः। अद्वैतवाक्यानामपि कथमद्वैते तात्पर्यमित्याशङ्क्यापूर्वार्थत्वादुपपत्तिमत्त्वाच्चेत्याह—**इह चेति**। अद्वैतं तावन्मानान्तरागोचरत्वादपूर्व[18]मेकमेवाद्वितीयमिति प्रागवस्थायां ब्रह्माद्वितीयं श्रुतम्। तदेवेदं[19] सृष्ट्वा तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेरनु[20]प्रविष्टं[21] जीवोऽभिलप्यते।

---

१ घ. °क्षामूलमात्रत्वं । २ छ. °तिस्मृत्युक्तत्वा° । ३ झ. °शङ्क्याऽऽह—जी° । ४ क. घ. झ. °षदः प्र° । ५ घ. छ. °पेक्षाया । ६ ख. °वृत्ते क° । ७ ख. °ण्डे य° । ८ ख ग. छ झ. °ष्यद्वृत्त्या । ९ ख. °कस्य व्या° । ज. °कद्वयव्या° । १० ख. घ. °त्यपरोऽर्थः । ११ क. भेदवत्याः श्रु° । १२ ज. °रस्यात्रानु° । १३ ख. स हि इ° । १४ ख. °ण्डार्थे ज्ञा° । ज. °ण्डार्थज्ञा° । १५ ज. °ध्य यज्ज्ञान° । १६ ख. °रतात° । १७ घ. ङ. °त्परवा° । १८ क. झ. °मेवा° । १९ झ. °दं दृष्ट्वा । २० झ. °प्रविष्टजी° । २१ क. °विष्टो जी° ।

तेन जीवस्य ब्रह्मतां(ता) संभवतीत्युपपत्त्याऽपि श्रुतेरद्वैतार्थत्वं गम्यते। सृष्ट्यादिश्रुतीनामद्वैते तात्पर्यं न सृष्ट्यादावित्यनन्तरमेव वक्ष्यते । तस्मादद्वैते श्रुतेस्तात्पर्यात्तदर्थस्यैव तात्त्विकतेत्यर्थः । न केवलमुपपत्तेरेवाद्वैते श्रुतेस्तात्पर्यं किं तु नवकृत्वोऽभ्यासादपीत्याह—तत्त्वमिति । भेददृष्टेरपवादाच्च श्रुतेरद्वैते तात्पर्यं प्रतिभातीत्याह—अन्योऽसाविति । आदिशब्देनाद्वैतवादीनि द्वैतनिषेधीनि[1] च वचनान्तराणि गृह्यन्ते । एकत्वमेव प्रतिपिपादयिषितमिति[2] पूर्वेण संबन्धः । एकत्वे श्रुतेस्तात्पर्ये[3] सिद्धे तृतीयपादावष्टम्भेन फलितमाह—अत इति । श्लोकस्य साध्याहारं व्याख्यानान्तरमाह—अथ वेत्यादिना ॥ १४ ॥

**मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ।**
**उपायः सोऽवताराय नास्ति भेदः कथंचन ॥ १५ ॥**

ननु यद्युत्पत्तेः प्रागजं सर्वमेकमेवाद्वितीयं[4] तथाऽप्युत्पत्तेरूर्ध्वं जातमिदं सर्वं जीवाश्च भिन्ना इति । मैवम् । अन्यार्थत्वादुत्पत्तिश्रुतीनाम् । पूर्वमपि परिहृत एवायं दोषः । स्वप्नवदात्ममायाविसर्जिताः संघाता घटाकाशोत्पत्तिभेदादिवज्जीवानामुत्पत्तिभेदा[5]दि[6]रिति[7] । इत एवोत्पत्तिभेदादिश्रुतिभ्य आकृष्येह पुनरुत्पत्तिश्रुतीनामैदंपर्य[8]प्रतिपिपादयिषयोपन्यासः । मृल्लोहविस्फुलिङ्गादिदृष्टान्तोपन्यासैः सृष्टिर्या[9] चोदिता प्रकाशिता[10]ऽन्यथा[11]ऽन्यथा च स[12] सर्वः सृष्टिप्रकारो जीवपरमात्मैकत्वबुद्ध्यवतारा[13]योपायोऽस्माकम् । यथा प्राणसंवादे वागाद्यासुरपाप्मवेधा[14]द्याख्यायिका कल्पिता प्राणवैशिष्ट्यबोधावताराय तदप्यसिद्धमिति चेत्[16] । न । शाखाभेदेष्वन्यथा[15]ऽन्यथा च प्राणादिसंवादश्रवणात् । यदि हि संवादः परमार्थ एवाभूदेकरूप एव संवादः सर्वशाखा[17]स्व[18]श्रोष्यद्वि[19]रुद्धानेकप्रकारेण नाश्रोष्यत्[20] । श्रूयते तु । तस्मान्न तादर्थ्यं संवादश्रुतीनाम् । तथोत्पत्ति[21]वाक्यानि प्रत्येतव्यानि । कल्पसर्गभेदात्संवादश्रुतीना[22]मुत्पत्तिश्रुतीनां च प्रतिसर्गमन्यथात्वमिति चेन्न । निष्प्रयोजनत्वा[23]द्यथो[24]क्तबु-

---

१ क. °षेधानि व° । २ ख. °ति सं° । ३ छ. झ श्रुतितात्प° । ४ घ. ङ. °यमिति श्रुत्वात° । ५ क. °त्तिर्भेदा° । ६ ज. °दि श्रुति° । ७ छ. °रित ए° । ङ. °रितीत ए° । ८ क. छ. ज. °नामैदंपारपर्य° । झ. °नामिदंप° । ९ झ. °ष्टिचर्या । १० ज. °ताऽन्य° । ११ क. °था च । १२ ज. सर्वः । १३ ज. °रायास्मा° । १४ ङ. झ. °धाख्या° । १५ क °था च । १६ क. हि वा° । १७ ज. °शास्वश्रोषाद्वि° । १८ घ. °स्वश्रौषीद्वि° । १९ च. °द्विबुद्धा° । २० घ. ज. नाश्रौषत् । २१ झ. तथा चोत्प° । २२ क. °तीनां प्र° । २३ ख. °नवत्त्वाद्य° । २४ छ. °क्तप्रयोजनबुद्ध्यवतारन्य° ।

द्ध्यवतारप्रयोजनव्यतिरेकेण । न ह्यन्यप्रयोजनैवत्त्वं[1] संवादोत्पत्तिश्रुतीनां शक्यं[2] कल्पयितुम् । तथात्वप्रतिपत्तये ध्यानार्थमिति चेन्न । कलहोत्पत्तिप्रलयानां[3] प्रतिपत्तेरनिष्टत्वात् । तस्मादुत्पत्त्यादिश्रुतय[4] आत्मैकत्वबुद्ध्यवतारायैव नान्यार्थाः[5] कल्पयितुं युक्ताः । अतो नास्त्युत्पत्त्यादिकृतो भेदः कथंचन ॥ १५ ॥

सृष्ट्यादिश्रुतिषु शब्दशक्तिवशादेव सृष्ट्यादिभेददृष्टेरद्वैतानुपपत्तिरित्याशङ्क्याऽऽह–**मृल्लोहेति** । उत्पत्त्यादिश्रुतीनां स्वार्थनिष्ठत्वमुपेत्य व्यावर्त्य[6] चोद्यमुत्थापयति—**नन्विति** । तासां स्वार्थनिष्ठत्वाभावान्निरवकाशं चोद्यमिति परिहरति—**नैवमिति** । परिहृतत्वाच्च नेदं चोद्यं सावकाशमित्याह–**पूर्वमपीति** । यदि प्रकृतोत्पत्त्यादिश्रुतिभ्यः सकाशादुपक्रमोपसंहारैकरूप्यं[7][8] तात्पर्यलिङ्गमाकृष्योद्भाष्य[9][10] मृषा सृष्ट्यादिश्रुतेः स्वार्थपरत्वं परिहृतं तर्हि पुनरुपन्यासो वृथा स्यादित्याशङ्कते[11]—**इत एवेति** । उत्पत्त्यादि[12]श्रुतीनां मिथ्यासृष्टिपरत्वं पूर्वमुक्तम् । इह तु तासां ब्रह्मात्मैक्ये तात्पर्यप्रतिपादने[13]च्छया[14] पुनरुपन्यासः सिध्यतीत्युत्तरमाह—**इह पुनरिति** । पादत्रयगतान्यक्षराणि योजयति—**मृदित्यादिना** । यः शब्दशक्त्या प्रतीयते न स श्रुत्यर्थो भवति किं तु तात्पर्यगम्यस्यैव श्रुत्यर्थतेत्यत्र दृष्टान्तमाह—**यथेति** । वागादीनां प्राणानामहं श्रेयान्[15]नहं श्रेयानिति मिथः[16] संघर्षः संवादस्तत्र याऽऽख्यायिका श्रूयते नासौ श्रुत्यर्थो भवति । वागादीनामचेतनत्वात् । तथा सृष्ट्यादिश्रुतिरपि न स्वार्थे[17] तात्पर्यवतीत्यर्थः । उदाहरणान्तरं सूचयति—**वागादीति** । देवासुरसङ्ग्रामे देवास्तावदसुरानभिभवितुं[18] यज्ञमुपचक्रमिरे[19] । वागादींश्चोद्गातृत्वेन वव्रिरे । तांश्च वागादीन्[20]कल्याणासङ्गेन[21] पाप्मनाऽसुरा विविधुरित्याख्यायिका[22] च न यथाश्रुतार्था । वागादीनां वागभावेनोद्गानासामर्थ्यात् । किं त्वसुरैरधर्षितत्वात्[23][24]प्राणोत्क्रान्तौ देहपातप्रसिद्धेश्च प्राणः श्रेष्ठो भवतीति प्राणवैशिष्ट्यनिश्चये बुद्ध्यवतारशेषत्वेन सा कल्पिता । तथैव प्रकृतेऽपि सृष्ट्यादिश्रुतेः स्वार्थे तात्पर्याभावात्तत्कार्यस्य तद्व्यतिरेकेणाभावात्तदेवास्तीत्यद्वैतबुद्ध्यवतारोपायत्वेन सृष्ट्या-

---

१ घ. °नत्वं सं° । २ छ. शक्यते क° । ३ झ. °नां तत्र प्र° । ४ झ. °दुपपत्त्यादि° । ५ च. नान्यथा क° । ६ ख. °न्यार्थावक° । ७ ग. झ. °रद्वयता° । ८ झ. °रूपं ता° । ९ ग. °कृष्येद्भाष्ये मृ° । झ. °कृष्ये मृ° । १० ख. छ. °द्भाव्य भाष्ये मृ° । ङ. °द्भाव्यं मृ° । ११ ग. झ. °दित्यध्याहृत्य श° । छ. °दिति श° । १२ झ. उत्पादितश्रु° । १३ छ. °नेच्छायां पु° । १४ ग. °या रूप° । १५ क. °यानि° । १६ छ. °थः संवाद° । १७ ग. झ. स्वार्थता° । घ. स्वार्थे ता° । १८ क. °वितुम्° । १९ ग. झ. °चक्रिरे । २० ग. झ. °दीनकल्याणस° । २१ ज. °णासंगतेन । २२ ग. झ. °त्याख्या° । २३ क. ख. °सुर° । २४ घ. °रैरुद्धर्षि° । ज. °रैराध° ।

दिप्रक्रिया कल्पितेत्यर्थः । देवताशब्दप्रयोगाच्चेतनत्वं वागादीनामिति मुख्यार्थत्वं संवादादिश्रवणस्य । अतोऽसिद्धमुदाहरणमिति शङ्कते—तदपीति । संवादविसंवादयोरसतोः श्रुतेऽर्थे प्रामाण्यमर्थवादानामित्यङ्गीकारादविरोधापेक्षमेवार्थवादप्रामाण्यम् । इह तु परस्परव्याहतिदर्शनान्न प्रामाण्यमिति परिहरति—न शाखाभेदेष्विति । प्राणादीत्यादिशब्देन मुख्यप्राणातिरिक्ता वागादयो गृह्यन्ते । उक्तमेव समाधानं व्यतिरेकमुखेन(ण) विवृणोति–यदि हीति । क्वचिद्विवदमानानां प्राणानां स्वयमेव निर्णेतुमशक्तानां प्रजापतिमुपगतानां यस्मिन्नुत्क्रान्ते शरीरमिदं पापिष्ठतरमिव तिष्ठति स वः श्रेष्ठो भवतीति तेनोक्तानां प्रवासः श्रूयते । क्वचित्तु स्वातन्त्र्येण । यस्मिन्नुत्क्रान्ते शरीरमिदं पतति स नः श्रेयानित्यालोच्य प्रवासो व्यपदिश्यते । क्वचित्पुनर्वाक्चक्षुःश्रोत्रमनांसीति मुख्यप्राणातिरिक्ताश्चत्वारः श्रूयन्ते । क्वचित्त्वगादयोऽपीत्येवं विरुद्धानेकप्रकारेण संवादश्रवणमस्तीत्याह—श्रूयते त्विति । प्राणसंवादश्रुतीनां मिथो विरोधान्नास्ति स्वार्थे प्रामाण्यमित्युपसंहरति—तस्मादिति । उक्तदृष्टान्तानुरोधादुत्पत्तिवाक्यान्यपि न विवक्षितार्थानि । क्वचिदाकाशादिक्रमेण सृष्टिः क्वचिदग्न्यादिक्रमेण क्वचित्प्राणादिक्रमेण क्वचिदक्रमेणेत्येवं परस्परपराहतिदर्शनादित्याह—तथेति । प्रतिकल्पं सृष्टिभेदस्येष्टत्वादुक्तश्रुतीनामपि प्रतिसर्गमन्यथात्वाद्व्यवस्थयाऽर्थवत्त्वं स्यादिति शङ्कते—कल्पेति । सिद्धे प्रामाण्ये व्यवस्था कल्प्यते । तदेव नाद्यापि सिद्धमित्युत्तरमाह—नेत्यादिना । तासां प्रयोजनवत्त्वं त्वयाऽपि स्वीकृतमित्याशङ्क्याऽऽह—यथोक्तेति । प्रयोजनान्तराभावं प्रकटयति—न हीति । प्राणादिभावप्राप्तये ध्यानार्थं प्राणादिसंकीर्तनमिति शङ्कते—तथात्वेति । तं यथा यथोपासते तदेव भवतीति श्रुतेः । न्यायसाम्यात्कलहादिध्यानात्तत्प्राप्तिः फलं स्यात् । तच्चानिष्टमिति परिहरति—नेत्यादिना । प्राणसंवादश्रुतीनां प्राणवैशिष्ट्यावबोधावतारार्थत्वमुपपाद्य दार्ष्टान्तिकमुपसंहरति—तस्मादिति । उत्पत्त्यादिश्रुतीनामुत्पत्त्यादिपरत्वाभावे फलितं चतुर्थपादावष्टम्भेन स्पष्टयति—अत इति ॥ १५ ॥

**आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः ।**
**उपासनोपदिष्टेयं तदर्थमनुकम्पया ॥ १६ ॥**

---

१ ग झ. °तनावत्त्वं वा° । २ क. °त्वं यागा° । ३ घ. ङ. श्रुत्यर्थे । ४ क. घ. °व्यावृत्तिद° । ५ ग. झ. °न्ते स्वश° । ६ क. सर्वः श्रे° । ७ छ. °नांसि मु° । ८ ख. °चित्तु त्वगा° । ९ घ. ज. °गादीत्ये° । १० ज. स्वार्थप्रा° । ११ छ. °स्परापह° । १२ क. °रापह° । १३ झ. °ति । संप्रति वाक्यं सृ° । १४ ग. प्रतिवाक्यं सृ° । १५ छ. °वस्थाः कल्पन्ते त° । १६ घ. °ति । य° । १७ ङ. °व च भ° । १८ ख. घ. °सामान्यात्क° । १९ क. °त्प्राप्तिफ° । २० ज. °र्थमु° ।

यदि पर[1] एवाऽऽत्मा नित्यशुद्धबुद्धमुक्तस्वभाव एकः परमा[2]र्थः सन् "एकमेवाद्वितीयम्" इत्यादिश्रुतिभ्योऽसदन्यत्किमर्थमुपासनोपदिष्टा। "आत्मा वा अरे द्रष्टव्यः"।"य आत्माऽपहतपाप्मा" "स क्रतुं कुर्वीत"। "आत्मेत्येवोपासीत" इत्यादिश्रुतिभ्यः। कर्माणि चाग्निहोत्रादीनि। शृणु तत्र कारणम्। आश्रमा आश्रमिणोऽधिकृताः। वर्णिनश्च मा[3]र्गगाः। आश्रमशब्दस्य प्रदर्शनार्थत्वात्त्रिविधाः। कथम्। हीनमध्यमो[4]त्कृष्टदृष्टयः। हीना निकृष्टा मध्यमोत्कृष्टा च दृष्टिर्द[5]र्शनसाम[6]र्थ्यं[7] येषां ते मन्दमध्यमोत्तमबुद्धिसामर्थ्योपेता इत्यर्थः। उपासनोपदिष्टेयं तदर्थं मन्दमध्यमदृष्ट्याश्रमाद्यर्थं कर्माणि च। न चाऽऽत्मैक एवाद्वितीय[8] इति निश्चितोत्तमदृष्ट्यर्थं दयालुना[9] वेदेनानुकम्पया सन्मार्गगाः सन्तः कथमिमामुत्तमामेकत्वदृष्टिं प्राप्नुयुरिति।

"यन्मनसा न मनुते येनाऽऽहुर्मनो मतम्।<br>
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते"॥

"तत्त्वमसि[10]" "आत्मैवेदं सर्वम्" इत्यादिश्रुतिभ्यः॥ १६॥

उत्पत्त्यादिश्रुतिविरोधमद्वैते परिहृत्योपासनविध्यनुपपत्तिविरोधं परिहरति—**आश्रमा इति**। आश्रमिणो वर्णिनश्च कार्यब्रह्मोपासका हीनदृष्टयः। कारणब्रह्मोपासका मध्य[11]मदृष्टयः। अद्वितीयब्रह्मदर्शनशीलास्तूत्तमदृष्टयः। एवमेतेषु त्रिविधेषु मध्ये[12] तेषां मन्दानां मध्यमानां चोत्तमदृष्टिप्रवेशार्थं दयालुना वेदेनोपासनोपदिष्टा। तथा चोपासनानुष्ठानद्वारेणोत्तमामेकत्वदृष्टिं क्रमेण प्राप्ता उत्तमेष्वेवा[13]न्तर्भवि[14]ष्यन्तीत्यर्थः। श्लोकव्यावर्त्यामाशङ्कामाह—**यदीति**। तस्यैव परमार्थतः सत्त्वे प्रमाणमाह—**एक[15]मेवेति**। द्वैतप्रतीतेर्मिथ्याद्वैतविषयत्वेनाविरोधमाह—**असदिति**। अद्वैतस्यैव वस्तुत्वे ध्यानविधिविरोधमाह—**किमर्थेति**। उपासनोपदेशमेव विशदयति—**आत्मेति**। तत्र हि निदिध्यासितव्य इत्युपासनोपदिश्यते। य आत्मेत्यादौ तु स विजिज्ञासितव्य इति ध्यानविधिः। स क्रतुमित्यत्र सशब्देन शमादिमानधिकारी परामृश्यते। अद्वैतस्यैव वस्तुत्वे कर्मविधिविरोधोऽपि प्रसरतीत्याह—**कर्माणि चेति**। किमर्थान्युपदिष्टानीति संबन्धः। अद्वैताधिकारिणोऽधि[16]कार्यन्तरं प्रति विधिद्वयं सावकाशमिति परिहरति—

---

१ छ. झ. 'रम ए'। २ ख. छ. °मार्थतः स°। ३ ङ. वेदगाः। ४ च. झ. °मोत्तमदृ°। ५ घ. ङ. ज. °र्शनं सा°। ६ घ. ङ. ज. °मर्थ्यमेषां। ७ क. °र्थ्यं च ये°। ८ ख. घ. °तीयमिति। ९ ज. °ना देवेना°। १० च. °मसीति आ°। ११ ङ. °ध्यदृ°। १२ घ. ज. °ध्ये म°। १३ ज. °वाऽऽविर्भ°। १४ छ. झ. °ष्यतीत्य°। १५ ग. झ. °कमिति। १६ झ. °कार्यान्त°।

**शृणिवति** । तत्रेत्युपासनोपदेशः कर्मोपदेशश्च गृह्यते । तदेव कारणमक्षरयोजनया प्रकटयति—**आश्रमा इति** । आश्रमशब्देनाऽऽश्रमिणो गृह्यन्तां वर्णिनस्तु कथं गृह्येरन्नित्याशङ्क्याऽऽह—**आश्रमेति** । शूद्रान्व्यावर्त्य त्रैवर्णिकानामेव ग्रहणार्थं मार्गगा इति विशेषणम् । त्रैविध्यमेवाऽऽकाङ्क्षाद्वारा स्फोरयति-**कथमित्यादिना** । कार्यब्रह्मविषयत्वान्निकृष्टत्वम् । मध्यमत्वं कारणब्रह्मविषयत्वात् । उत्कृष्टत्वमद्वैतविषयत्वादिति द्रष्टव्यम् । एवं पूर्वार्धं व्याख्यायोत्तरार्धं व्याकरोति—**उपासनेति** । कर्मोपदेशस्यापि तदर्थत्वमाह—**कर्माणि चेति** । व्यावर्त्यां शङ्कां दर्शयति—**न चेति** । वेदेनोपासनाद्युपदेशे मन्दानां मध्यमानां च कथमनुग्रहः सिध्यतीत्याशङ्क्याऽऽह—**सन्मार्गगा इति** । प्राप्नुयुरित्युपासनोपदिष्टा कर्माणि चेति पूर्वेण संबन्धः । उपास्यं ब्रह्मैव न भवतीति प्रतिषेधान्मन्दमध्यमदृष्टिविषयत्वमुपासनस्य प्रतिभातीत्याह—**यन्मनसेति** । अद्वैतदृष्टीनां तु वर्णाश्रमभेदाभिमानाभावादेव नोपासनं कर्म वा संभवतीत्याह—**तत्त्वमसीति** ॥ १६ ॥

## स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।
## परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥ १७ ॥

शास्त्रोपपत्तिभ्यामवधारितत्वाददद्वयात्मदर्शनं सम्यग्दर्शनं तद्बाह्यत्वान्मिथ्यादर्शनमन्यत् । इतश्च मिथ्यादर्शनं द्वैतिनां रागद्वेषादिदोषास्पदत्वात्कथं स्वसिद्धान्तव्यवस्थासु स्वसिद्धान्तरचनानियमेषु कपिलकणादबुद्धार्हतादिदृष्ट्यनुसारिणो द्वैतिनो निश्चिताः । एवमेवैष परमार्थो नान्यथेति तत्र तत्रानुरक्ताः प्रतिपक्षं चाऽऽत्मनः पश्यन्तस्तं द्विषन्त इत्येवं रागद्वेषोपेताः स्वसिद्धान्तदर्शननिमित्तमेव परस्परमन्योन्यं विरुध्यन्ते । तैरन्योन्यविरोधिभिरस्मदीयोऽयं वैदिकः सर्वानन्यत्वादात्मैकत्वदर्शनपक्षो न विरुध्यते । यथा स्वहस्तपादादिभिः । एवं रागद्वेषादिदोषानास्पदत्वादात्मैकत्वबुद्धिरेव सम्यग्दर्शनमित्यभिप्रायः ॥ १७ ॥

अद्वैतदर्शनस्योपासनादिविधिविरोधाभावेऽपि मतान्तरैर्विरोधोऽस्तीत्याशङ्क्य तेषां भ्रान्तिमूलत्वान्नैवमित्याह—**स्वसिद्धान्तेति** । श्लोकस्य तात्पर्यं वक्तुं भूमिकां करोति—**शास्त्रेति** । तद्बाह्यत्वादित्यत्र तच्छब्देन शास्त्रोपपत्ती गृह्येते । द्वैतदर्शनस्य

---

१ ज. तत्राप्युपा° । २ क. तदैव । ३ ज. स्फोटयति । ४ घ. छ. ज. °वर्त्यांश° । जः °वर्त्यांशं द° । ५ ग. ज. झ. वेदनो° । ६ घ. °देशम° । ७ ज. °नां च क° । ८ झ. °दृष्टी वि° । ९ क. °थं सि° । १० च. °द्धादि° । ११ च. °न्तप्रद° । १२ क. °षाना° । १३ ङ. °य. ॥ १७ ॥ अ° ।

मिथ्यादर्शनत्वे हेत्वन्तर[1]परत्वमवतारितस्य श्लोकस्य दर्शयति—इतश्चेति । इतःशब्दार्थमेव दर्शयति—द्वैतिनामिति । आदिशब्देन[2] मदमानादयो गृहीताः । स्वीयं स्वीयं सिद्धान्तं व्यवस्थापयितुं तत्त्वज्ञानमधिकृत्य प्रवृत्तानां वादिनां कुतो दोषास्पदत्वमित्याक्षिपति—कथमिति । श्लोकाक्षरयोजनया परिहरति—स्वसिद्धान्तेत्यादिना[3] । निश्चयमेव [4]स्फोरयति—एवमेवेति । रागास्पदत्वेऽपि तेषां[5] द्वेषास्पदत्वं कथमित्याशङ्क्याऽऽह—प्रतिपक्षमिति । उत्तरार्धं विभजते—स्वसिद्धान्तेति । यद्धि वादिनां प्रत्ये[6]कं स्वसिद्धान्तत्वेनो[7]पसंगृहीतं दर्शनं तन्निर्धारणार्थमन्यो[8]न्यं वादिनो विरोधमाचरन्तो दृश्यन्ते । न च तैरद्वैतदर्शनं विरुध्यमान[9]मध्यवसीयते । *यथा स्वकीयकरचरणादिभिराघाते कदाचिदाचरितेऽपि द्वेषो न जायते । परबुद्ध्यभावात्तथा द्वैताभिमानिभिरुपद्रवे क्षुद्रे कृतेऽपि नाद्वैतदर्शिनस्तेषु द्वेषो जायते । सर्वा[10]नन्यत्वात्परबुद्ध्यभावादित्यर्थः । अद्वैतदर्शनस्य सम्यग्दर्शनत्वं प्रतिज्ञातं कथं प्रदर्शि[11]तया प्रक्रियया प्रतिपन्नमित्याशङ्क्याऽऽह—एवमिति ॥ १७ ॥

**अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ।**
**तेषामुभयथा द्वैतं तेनायं न विरुध्यते ॥ १८ ॥**

केन हेतुना तैर्न विरुध्यत इत्युच्यते । अद्वैतं परमार्थो हि यस्माद्द्वैतं नाना[12]त्वं तस्याद्वैतस्य भेद[13]स्तद्भेदस्तस्य कार्यमित्यर्थः[14] । "एकमेवाद्वितीयम्" । "तत्तेजोऽसृजत" इति श्रुतेः । उपपत्तेश्च । स्वचित्तस्पन्दनाभावे समाधौ मूर्छायां सुषुप्तौ[15] चाभावात् । अतस्तद्भेद उच्यते द्वैतम् । द्वैतिनां तु तेषां परमार्थत[16]श्चा[17]परमार्थतश्चोभयथाऽपि द्वैतमेव । यदि च तेषां भ्रान्तानां द्वैतदृष्टिरस्माकमद्वैतदृष्टिरभ्रान्तानाम् । तेनायं हेतुनाऽस्मत्पक्षो न विरुध्यते[18] तैः । "इन्द्रो मायाभिः पुरुरूप ईयते" । "न तु तद्द्वितीयमस्ति" इति श्रुतेः । यथा मत्तगजारूढ उन्मत्तं भूमिष्ठं प्रति गजारूढोऽहं[19] वाहय मां प्रतीति ब्रुवाणमपि तं प्रति न वाहयत्यविरोधबुद्ध्या तद्वत् ।

---

* अत्र ङ. नाम्नि पुस्तके टिप्पणम्—"भागवतैकादशस्कन्धे । जिह्वां क्वचित्संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत्" इति ।

---

१ ग. झ. °रम° । २ ग. झ. °न सह मा° । ३ छ. °ना । उत्तरार्धनि° । ४ ज. स्फोटयति । ५ छ. °षां दोषा° । ६ छ. °त्येकस्व° । ७ क. °सिद्धान्तेनो° । ८ झ. °न्योन्यवा° । ९ ग. झ. °मव° । १० झ. °र्वानन्य° । ११ ग. झ. °ताक्रि° । १२ क. °नात्वमस्याद्वै° । १३ क. °दस्तस्य । १४ ङ. °र्थः । केन हेतुना तैर्न विरुध्यत इत्युच्यते । "ए° । १५ च. झ. °सौ वाऽभा° । १६ क. °तश्चो° । ङ. °तश्चापरार्थतश्चोभ° । १७ झ. °र्थश्चोभ° । १८ ज. °ते । "इ° । १९ ज. °हं गजं वा° ।

**ततः परमार्थतो ब्रह्मविदात्मैव द्वैतिनाम् । तेनायं हेतुनाऽस्मत्पक्षो न विरुध्यते तैः ॥ १८ ॥**

द्वैतपक्षैरद्वैतपक्षस्य विषयद्वारके विरोधेऽधिगम्यमाने कथमविरोधवाचोयुक्तिरित्याशङ्क्य स्वमतपर्यालोचनया तावदविरोधमाह—**अद्वैतमिति** । मिथ्याभूतेन द्वैतेनाद्वैतस्याविरोधेऽपि परमार्थभूतेन तेन विरोधः स्यादित्याशङ्क्य तथाविधं द्वैतमेव नास्तीति मत्वाऽऽह—**तेषामिति** । द्वैतिनां परमार्थत्वेनापरमार्थत्वेन च द्वैतमेव व्यवहारगोचरीभूतम् । तच्च संप्रतिपन्नद्वैतवन्मिथ्येत्येवं स्थिते न द्वैतेनाद्वैतस्य विरोधः शक्यशङ्को भवतीत्यर्थः । श्लोकप्रतिषेध्यं प्रश्नं करोति—**केनेति** । श्लोकाक्षराणामर्थमाचक्षाणो हेतुमाह—**उच्यत इति** । द्वैतस्याद्वैतकार्यत्वे प्रमाणमाह—**एकमेवेति** । श्रुतिप्रामाण्याद्द्वैतस्याद्वैतकार्यत्वावगमात्कार्यस्य च कारणाद्भेदेन सत्त्वनिषेधात्तत्सत्यमित्यवधारणान्नाद्वैतदर्शनं द्वैतदर्शनेन विरुद्धमित्यर्थः । अद्वैतदर्शनं द्वैतदर्शनैरविरुद्धमित्यत्रैव युक्तिमाह—**उपपत्तेश्चेति** । तामेवोपपत्तिं संक्षिप्य दर्शयति—**स्वचित्तेति** । सुषुप्त्यावस्थायां स्वकीयचित्तस्पन्दनाभावे मिथ्याज्ञानोपरमे सति द्वैतदर्शनाभावादद्वैतं सिद्धम् । ततश्च स्वप्नवज्जाग्रद्भेदानामुत्पत्तिदर्शनादित्युपपत्तेर्द्वैतमद्वैतकार्यं न च कारणं तत्कार्यप्रतिभासैर्विरुध्यते । कार्यस्य वाचारम्भणमात्रत्वात्कारणातिरेकेणाभावादित्यर्थः । तेषामित्यादिभागं विभजते—**द्वैतिनां त्विति** । परमार्थद्वैतांशेनाद्वैतविरोधमाशङ्क्य द्विधा व्यवहारेऽपि विमतस्य द्वैतस्य द्वैतत्वादेव संप्रतिपन्नवन्मिथ्यात्वसिद्धेर्न तेन विरोधोऽद्वैतस्येति मन्वानः सन्नाह—**यदि चेति** । भ्रान्तिमूलद्वैतदर्शनैरद्वैतदर्शनं प्रमाणमूलमविरुद्धमित्येतद्दृष्टान्तेनोपपादयति—**यथेत्यादिना** । कार्यकारणभूतयोर्द्वैताद्वैतयोरविरोधे सिद्धे फलितमाह—**तत इति** । अद्वैतिनां द्वैतिनां च प्रातिस्विकपक्षपर्यालोचनातो द्वैतपक्षैरद्वैतपक्षो विरुद्धो न भवतीति फलितमुपसंहरति—**तेनेति** ॥ १८ ॥

**मायया भिद्यते ह्येतन्नान्यथाऽजं कथंचन ।**
**तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत् ॥ १९ ॥**

द्वैतमद्वैतभेद इत्युक्ते द्वैतमप्यद्वैतवत्परमार्थसदिति स्यात्कस्यचिदाश-

---

१ क. °ह्मविदा° । २ च. झ. °तिनस्तेना° । ३ ख. घ. ङ. ज. °धे ग° । ४ ङ. °न द्वैते° । ५ घ. °मेवास्ती° । ६ झ. द्वैतिकानां । ७ घ. द्वैताना° । ८ छ. °रोधश° । ९ छ. °शङ्का भ° । १० झ. °श्नं प्रक° । ११ ग. झ. °र्शने° । १२ छ. °त्यत्रै° । १३ ग. झ. °प्रजाग्र° । १४ झ. °न्नमिथ्या° । १५ छ. °वन्न मिथ्या° । १६ ख. ग. छ. झ. °मूलैर्द्वैत° । १७ ज. °रद्वैतविरुद्धत्वे सि° । १८ ख. घ. ङ. °विरुद्धत्वे सि° । १९ ख. °नां प्रा° । २० क. °पक्षैरद्वैतपक्षो° । २१ झ. °द्वैत इ° ।

**द्वैत्यत आह । यत्परमार्थसदद्वैतं मायया भिद्यते ह्येतत्तैमिरिकानेकचन्द्रवद्रज्जुः सर्पधारादिभिर्भेदैरिव न परमार्थतो निरवयवत्वादात्मनः । सावयवं ह्यवयवान्यथात्वेन भिद्यते । यथा मृद्घटादिभेदैः । तस्मान्निरवयवमजं नान्यथा कथंचन केनचिदपि प्रकारेण न भिद्यत इत्यभिप्रायः । तत्त्वतो भिद्यमाने ह्यमृतमजमद्वयं स्वभावतः सन्मर्त्यतां व्रजेत् । यथाऽग्निः शीतताम् । तच्चानिष्टं स्वभाववैपरीत्यगमनम् । सर्वप्रमाणविरोधात् । अजमव्ययमात्मतत्त्वं माययैव भिद्यते न परमार्थतः । तस्मान्न परमार्थसद्द्वैतम् ॥ १९ ॥**

अद्वैतमेव द्वैतात्मना परिणमते चेद्द्वैतमपि तात्त्विकं स्यादित्याशङ्क्याऽऽह—**माययेति** । विवर्तवादानङ्गीकारे दोषमाह—**तत्त्वत इति** । पूर्वार्धव्यावर्त्यामाशङ्कामादर्शयति—**द्वैतमिति** । तत्र पूर्वार्धाक्षराण्यवतार्य व्याकरोति—**अत आहेति** । विमतो भेदो मिथ्याभेदत्वाच्चन्द्रादिभेदवदित्यर्थः । विमतं तत्त्वतो भेदरहितम् । निरवयवत्वान्नित्यत्वादजत्वाच्च व्यतिरेकेण मृदादिवदित्याह—**नेत्यादिना** । निरवयवत्वेऽपि वस्तुनः स्फुटनधर्मत्वमाशङ्क्याऽऽह—**सावयवं हीति** । उक्तमनुमानं निगमयति—**तस्मादिति** । अन्यथा परमार्थत्वेनेत्यर्थः । पुनर्नञनुकर्षणमन्वयार्थं, कार्यत्वधर्मत्वांशत्वादिरत्र प्रकारोऽभिप्रेतः । विपक्षे दोषं वदन्द्वितीयार्धं विवृणोति—**तत्त्वत इति** । प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे—**तच्चेति** । विवर्तवादमुपसंहरति—**अजमिति** । स्थिते विवर्तवादे फलितमाह—**तस्मादिति** ॥ १९ ॥

अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः ।
अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥ २० ॥

**ये तु पुनः केचिदुपनिषद्व्याख्यातारो ब्रह्मवादिनो वावदूका अजातस्यैवाऽऽत्मतत्त्वस्यामृतस्य स्वभावतो जातिमुत्पत्तिमिच्छन्ति परमार्थत एव तेषां जातं चेत्तदेव मर्त्यतामेष्यत्यवश्यम् । स चाजातो ह्यमृतो भावः स्वभावतः सन्नात्मा कथं मर्त्यतामेष्यति । न कथंचन मर्त्यत्वं स्वभाववैपरीत्यमेष्यतीत्यर्थः ॥ २० ॥**

स्वपक्षमुक्त्वा स्वयूथ्यपक्षमनुभाष्य दूषयति—**अजातस्येति** । अनुवादविभागं विभजते—**ये त्विति** । स्वभावत एवाजातस्य स्वभावत एवामृतस्य चाऽऽत्मत-

---

१ झ. °द्रज्जुस° । २ क. सर्पादिधा° । ३ ज. °यवत्वं ह्य° । ४ छ. °यया भि° । ५ छ. °णतं चे° । ६ झ. °शकत्वा° । ७ च. °तं चैतदेव । ८ क. °मृतभा° । ९ क. °र्त्यत्वस्व° । १० झ. ग. ङ. छ. °दभा° । ११ छ. एव जा° । १२ ङ. °वाऽजस्य ।

त्वस्य परमार्थत एव जातिमुत्पत्तिं ये स्वयूथ्याः स्वी कुर्वन्तीत्यर्थः । जातस्य हि ध्रुवो मृत्युरितिन्यायेन दूषयति—तेषामिति । अजातो हीत्याद्यक्षराण्युक्तेऽर्थे योजयति—स चेति ॥ २० ॥

**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।**
**प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥ २१ ॥**

यस्मान्न भवत्यमृतं[2] मर्त्यं लोके नापि मर्त्यममृतं तथा[3] । ततः प्रकृतेः[4] स्वभावस्यान्यथाभावः[5] स्वतः प्रच्युतिर्न कथंचिद्भविष्यति । अग्नेरिवौष्ण्यस्य ॥ २१ ॥

पदार्थानां स्वभाववैपरीत्यगमनमनुपपन्नमित्युक्तं प्रपञ्चयति—न भवतीति । तत्र पूर्वार्धं हेतुत्वेन व्याचष्टे[6]—यस्मादिति । उत्तरार्धं हेतुमत्त्वेन[7] योजयति—तत इति । यथाऽग्नेः स्वभावभूतस्योष्णत्वस्यान्यथात्वं[8] शैत्यगमनमयुक्तं तथाऽन्यत्रापि स्वभावस्यान्यथात्वमनुचितं स्वरूपनाशप्रसङ्गादित्यर्थः ॥ २१ ॥

**स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम् ।**
**कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ २२ ॥**

यस्य पुनर्वादिनः स्वभावेनामृतो भावो मर्त्यतां गच्छति परमार्थतो जायते तस्य प्रागुत्पत्तेः[9] स भावः स्वभावतोऽमृत[10] इति प्रतिज्ञा मृषैव । कथं तर्हि कृतकेनामृतस्तस्य स्वभावः[11] कृतकेनामृतः[12] स कथं स्थास्यति निश्चलोऽमृतस्वभावतया[13] न कथंचित्स्थास्यत्यात्मजातिवादिनः सर्वदाऽजं नाम नास्त्येव सर्वमेतन्मर्त्यम् । अतोऽनिर्मोक्षप्रसङ्ग इत्यभिप्रायः[14] ॥ २२ ॥

ननु ब्रह्म कारणरूपेण प्रागुत्पत्तेरमृतमपि कार्याकारेणोत्पत्त्युत्तरकालं मर्त्यतां गमिष्यति । ततो रूपभेदादुभयमविरुद्धमिति[15] तत्राऽऽह[16]—स्वभावेनेति । पूर्वार्धं साध्याहारं योजयति—यस्येति । प्रागवस्थायामपि कारणस्यैव कार्याकारेण जन्मयोग्यतया मर्त्यत्वावगमान्मृषैव प्रतिज्ञा स्यादित्यर्थः । कथं तर्हि तस्य प्रतिज्ञा युक्तेत्याशङ्क्य कृतकेन मर्त्यविलयेनामृतस्तस्य[17] वादिनः स कारणाख्यो भावो भवतीति प्रतिज्ञा युक्ते-

---

१ ख. घ. ङ. छ. ज. °ण्युक्तार्थे । २ क. मर्त्यलो° । ३ च. °था । यतः । ४ क. °कृते स्व° । ५ च. °भावः स्व° । ६ क. °ष्टे—तस्मा° । ७ ख. °तुत्वेन । ८ क. °तस्येष्टत्व° । ९ च. ज. झ. °त्तेः स्व° । १० ज. °भावो मृ° । ११ ख. घ. ज. °स्य भा° । ङ. छ °स्य सभा° । १२ च. °तः सन्कथं । १३ ख. घ. ज. झ. °वस्तथा । १४ ख. घ. छ. ज. इति भावः ॥ २२ ॥ १५ ग. झ. °यतः, वि° । १६ ग. झ. तदाह । १७ ङ. °तस्य ।

त्याह—**कथमित्यादिना** । भवतु प्रलयावस्थायाममृतावस्थापरिणामेनामृतत्वं ततो वा किं स्यादित्याशङ्क्याऽऽह—**कृतकेनेति** । कृतकत्वस्य यत्कृतकं तदनित्यमिति विनाशित्वेन व्याप्तत्वादित्यर्थः । किं चास्यामवस्थायां कार्यमात्रं वस्त्वित्यजं ब्रह्मास्मीतिज्ञानाभावान्मोक्षो न स्यादित्याह—**आत्मेति** ॥ २२ ॥

**भूततोऽभूततो वाऽपि सृज्यमाने समा श्रुतिः ।**
**निश्चितं युक्तियुक्तं च यत्तद्भवति नेतरत् ॥ २३ ॥**

नन्वजातिवादिनः सृष्टिप्रतिपादिका[2] श्रुतिर्न संगच्छते प्रामाण्यम् । बाढं विद्यते सृष्टिप्रतिपादिका श्रुतिः । सा त्वन्यपरा । उपायः सोऽवतारायेत्यवोचाम । इदानीमुक्तेऽपि परिहारे पुनश्चोद्यपरिहारौ विवक्षितार्थं प्रति सृष्टिश्रुत्यक्षराणामानुलोम्यविरोधाशङ्कामात्रपरिहारार्थौ । भूततः परमार्थतः सृज्यमाने वस्तुन्यभूततो मायया[3] वा मायाविनेव सृज्यमाने वस्तुनि समा तुल्या सृष्टिश्रुतिः । ननु गौणमुख्ययोर्मुख्ये शब्दार्थप्रतिपत्तिर्युक्ता[5] । न । अन्यथा सृष्टेरप्रसिद्धत्वान्निष्प्रयोजनत्वाच्चेत्यवोचाम । अविद्यासृष्टिविषयैव सर्वा गौणी मुख्या च सृष्टिर्न परमार्थतः[6] । "सबाह्याभ्यन्तरो ह्यजः" इति श्रुतेः । तस्माच्छ्रुत्या निश्चितं यदेकमेवाद्वितीयमजममृतमिति युक्तियुक्तं च । युक्त्या च संपन्नं तदेवेत्यवोचाम पूर्वैर्ग्रन्थैः[7] । तदेव[8] श्रुत्यर्थो भवति नेतरत्कदाचिदपि ॥ २३ ॥

परिणामवादस्य सृष्टिश्रुत्यनुसारेण स्वीकार्यत्वमाशङ्क्य निरस्यति—**भूतत इति** । परिणामवादे विवर्तवादे च सृष्टिश्रुतेरविशेषादद्वैतानुरोधिश्रुतियुक्तिवशाद्विवर्तवादस्यैव स्वीकर्तव्यतेति भावः । सृष्टिश्रुतेरद्वैतानुगुण्ये प्रमाणयुक्त्यनुगृहीतमद्वैतमेवाभ्युपगन्तव्यमिति फलितमाह—**निश्चितमिति** । श्लोकव्यावर्त्यां[9] शङ्कां दर्शयति—**नन्विति** । यद्यात्मा कार्याकारेण न जायते तर्हि सृष्टिश्रुतिरश्लिष्टा स्यादित्यर्थः । सृष्ट्यनुवादिनी श्रुतिरस्तीत्यङ्गी करोति—**बाढमिति** । तस्या मिथ्यासृष्ट्यनुवादित्वेन कथमुपपत्तिरित्याशङ्क्याऽऽह—**सा त्विति** । कथमद्वैतपरत्वेन सृष्टिश्रुतेरुपपत्तिरित्याशङ्क्याऽऽह—**उपाय इति** । यदि सृष्टिश्रुतेरद्वैतपरत्वेन तद्विरोधसमाधी अधस्तादेवोक्तौ तर्हि पुनश्चोद्यं तत्परिहारश्[10]चायुक्तौ पुनरुक्तेरित्याशङ्क्याऽऽह—**इदानीमिति** । मिथ्यासृष्टि-

---

१ ज. 'क्तिमुक्तं । २ ख. °दिकश्रु° । ३ ज. 'या मा' । ४ क. मायां वि° । ५ च. °त्तिर्न युक्तेति चेत् । न । ६ झ. °मार्थः स° । ७ छ. पूर्वग्रन्थैः । ८ घ. 'व भ° । ९ घ. ङ. ज. °वर्त्योश° । छ. °वर्त्यामाश° । १० क. छ. °रश्च यु° ।

वादे श्रुतिपदानामसृजताभवदित्यादीनां[1]मसामञ्जस्यविरो[2]धाशङ्कायां तावन्मात्रं परिहर्तुं पुनश्चोद्यपरिहाराविव्यर्थः । श्लोकस्य तात्पर्यमुक्त्वा पूर्वार्धाक्षराणि व्याकरोति—भूतं[3]त इति। माया ह्येषा मया सृष्टेत्यादिवत्तत्तेजोऽसृजतेति श्रुतिः । सर्वं[4] त्वचाभवदिति श्रुतिस्तु देवदत्तो व्याघ्रोऽभवदितिवत् । न च सत्यत्वं विशेषणं[5]मत्रोपलभ्यते । तेन मायामय्यां सृष्टाविष्टायामपि सृष्टिश्रुतिः श्लिष्टेत्यर्थः । गौणमुख्ययोर्मुख्ये[6] संप्रत्यय इति न्यायमाश्रित्य शङ्कते—नन्विति। अग्निर्माणवक इत्यत्र माणवकेऽग्निशब्दप्रयोगे[8]ऽप्यग्निमानयेत्यादिप्रयोगे प्रथमं वह्निप्रतीतिर्मुख्यमेव प्रथमं प्रतिभातीति मुख्ये पदव्युत्पत्तेर्मुख्यार्थतयां[9] सत्या सृष्टिरेष्टव्येत्यर्थः । मुख्यसृष्टयङ्गीकारेऽपि सत्या सृष्टिर्न सिध्यति[10] । अस्मत्पक्षे सत्यायाः सृष्टेः सृष्टिशब्दार्थत्वेनाप्रसिद्धत्वादिति परिहरति—नेत्यादिना । लौकिकानां मुख्यसृष्टेः सत्यसृष्टित्वेन प्रसिद्धत्वेऽपि फलाभावान्न तत्र श्रुतितात्पर्यमित्याह—निष्प्रयोजनत्वाच्चेति। अन्यथा सृष्टेरप्रसिद्धत्वमेवं[11] स्पष्टयति—अविद्येति। गौणी स्वप्ने रथादिसृष्टिः। मुख्या जागरे घटादि[12][13]सृष्टिः सर्वाऽप्यविद्यावस्थायामेव तस्यां सत्यामेव भावान्न तत्त्वदृष्टा काऽपि सृष्टिः संभवति। तथा भूतं[14]स्यान्यथाभूतस्य स्वतः परतो वा वस्तुनोऽन्यथाभावासंभवात्तदतिरेकेण च सृष्टेरयोगादित्यर्थः। वस्तुस्वरूपालोचनया वास्तव्याः सृष्टेरश्लिष्टत्वे श्रुतिमनुकूलयति—सवाह्येति। सृष्टेरवि[15]द्याविद्यमानत्वेऽपि किं वस्तु विवक्षितमित्याशङ्क्योत्तरार्धं विभजते—तस्मादिति । निरवयवत्वं विभुत्वमित्यादियुक्तिः । तेनाद्वैतमेव श्रुतितात्पर्यगम्यं न द्वैतमिति फलितमाह—तदेवेति ॥ २३ ॥

नेह नानेति चाऽऽम्नायादिन्द्रो मायाभिरित्यपि ॥
अजायमानो बहुधा मायया जायते तु सः ॥ २४ ॥

कथं श्रुतिनिश्चय इत्याह—यदि हि भूतं[16]त एव सृष्टिः स्यात्ततः सत्यमेव नाना वस्त्विति तदभावप्रदर्शनार्थ[17]माम्नायो न स्यात्। अस्ति च "नेह नानाऽस्ति किंचन" इत्यादिराम्नायो द्वैतभावप्रतिषेधार्थः । तस्मादात्मैकत्वप्रतिपत्त्यर्थ[18]र्था कल्पिता सृष्टिरभूतैव प्राणसंवादवत्। "इन्द्रो

---

१ ग. ज. °मञ्ज°। २ ग झ. °रोधश°। ३ ज. °त इ°। ४ घ °च सचा°। ५ क. °ति। तन्न। न। ६ ग. घ. °णमेवोप°। ७ क. °ख्ये कार्यसं°। ८ क. °योगोऽप्य°। ९ ज. °या सृ°। १० ख. °सिध्येत्। ग. घ. झ. सिध्येदस्मिन्पक्षे। छ. सिध्यतीत्यस्मिन्पक्षे। ज. सिध्यत्यस्मिन्पक्षे। ११ ग. °व स्फुटय°। १२ घ. °दिद्दष्टिः। १३ घ. °सृष्टिरेवं यदि सृष्टिः स°। १४ ख. घ. ङ. छ. ज. °तस्य स्व°। १५ ख. घ. ज. °द्यायां वि°। १६ क. °त ए°। १७ ख. घ. ङ. ज. °नार्थ आम्ना°। १८ घ. °त्यर्थं क°।

मायाभिः" इत्थंभूतार्थप्रतिपादकेन मायाशब्देन[2] व्यपदेशात्। ननु प्रज्ञा-वचनो मायाशब्दः। सत्यम्। इन्द्रियप्रज्ञाया अविद्या[3]मयत्वेन माया-त्वाभ्युपगमाददोषः। मायाभिरिन्द्रियप्रज्ञाभिरविद्यारूपाभिरित्यर्थः। "अजायमानो बहुधा विजायते" इति श्रुतेः। तस्मान्माययैव जायते तु सः। तुशब्दोऽवधारणार्थः—माययैवेति। न ह्यजायमानत्वं बहुधा जन्म चैकत्र संभवति। अग्नाविव शैत्यमौष्ण्यं[4] च। फलवत्त्वाच्चाऽऽत्मैकत्व-दर्शनमेव श्रुतिनिश्चितोऽर्थः। "तत्र को मोहः कः शोक एकत्वमनुप-श्यतः" इत्यादिमन्त्रवर्णात्। "मृत्योः स मृत्युमाप्नोति" इति निन्दि-तत्वाच्च सृष्ट्यादिभेददृष्टेः ॥ २४ ॥

सृष्टेर्मृषात्वस्पष्टीकरणद्वारेणाद्वैतमेव श्रुत्यर्थतया निर्धारयितुं[5] श्रौतनिश्चयमेव विवृ-णोति—नेहेति। आकाङ्क्षां[6] प्रदर्श्य श्लोकाक्षराणि व्याकरोति—**कथमित्यादिना।** तत्राऽऽद्यपादे[7] व्यतिरेकं दर्शयित्वा पुनरन्वयाख्यानेन व्याचष्टे—**यदि हीति।** द्वैत-भावश्चेत्प्रतिषिध्यते कथं तर्हि सृष्टिरुपदिश्यते तत्राऽऽह—**तस्मादिति।** यथा प्राण-वैशिष्ट्यदृष्ट्यर्थं[8] प्राणसंवादः श्रुतिषु कल्प्यते तथा सृष्टिरेकत्वप्रतिपत्त्यर्थत्वेन कल्पिता। वास्तव्याः[9] सृष्टेरयोगस्योपदिष्टत्वादित्यर्थः[10]। कल्पिता सृष्टिरित्यत्र हेत्वन्तरं दर्शयन्द्वितीयं पादमवतार्य[11] तात्पर्यमाह[12]—**इन्द्र इति।** मायाशब्देन सृष्टेर्व्यपदे-शादसौ कल्पिता युक्तेति शेषः। अभिधानग्रन्थे प्रज्ञानामसु पाठान्मायाशब्दो मिथ्यार्थो न भवतीति शङ्कते—**नन्विति।** मायाशब्दस्य प्रज्ञानामसु क्वाचित्कं पाठमङ्गी करोति—**सत्यमिति।** कथं तर्हि मिथ्यार्थत्वं[13] तत्राऽऽह—**इन्द्रियेति।**[14] न हि मायाशब्दिता प्रज्ञा ब्रह्मचैतन्यम्। भूयश्चान्ते विश्वमायानि+वृत्तिरित्यादौ निवृत्तिश्रवणात्। किं त्वसाविन्द्रियजन्या[15] तस्याश्चाविद्यान्वयव्यतिरेकानुविधायितया विद्या[16]त्वेन मिथ्यात्वा[17]न्मायाशब्दस्य मिथ्यार्थत्वेनानुपपत्तिरित्यर्थः। तात्पर्यार्थमुक्त्वा तत्रैवाक्षरानुगुण्यमाह—**मायाभिरिति।** पुरुरूपः सन्नीयत इति संबन्धः। माया-मयी सृष्टिरित्यत्र हेत्वन्तरै[18]परत्वेन तृतीयपादमवतारयति—**अजायमान इति।** अजा-

---

+ ङ. निवृत्तिरेव त्रिधा नश्यति चाऽऽत्ममायेति श्वेताश्वतरोपनिषदि, इत्यादौ निवृत्तिश्र°।

---

१ ख. छ. ङ. °त्यप्यभू°। २ झ. °न सृष्टेर्व्यप°। ३ ज. झ. °द्यात्वे°। ४ छ. शैत्यौष्ण्यं। ५ ग. झ. °र्धारितुं। ६ ज. अकाङ्क्षं। ७ ग. झ. °त्राऽऽद्यं पादं व्य°। ८ ज. °शिष्ट्यार्थे। ९ ख. °स्तव्यायाः सृ°। १० झ. पपादितत्वादि°। ११ झ. °र्यमा°। १२ घ. ङ. ज. °त्पर्यार्थमा°। १३ ग. झ. °थ्यात्वं। १४ ख. °रिति नि°। १५ झ. °जन्यतया त°। १६ ख. °द्यामयत्वेन। १७ ग. ज. °त्वार्थ°। १८ झ. °रत्वे°।

यमानस्य बहुधा विजायमानत्वं विरुद्धमित्याशङ्क्य चतुर्थपादमुत्थापयति—**तस्मादिति**। अश्रुतस्य कथमेवकार[१]स्याऽऽवापः स्यादित्याशङ्क्याऽऽह—**तुशब्द इति**। अवधारणरू[२]पमर्थमेवाभिनयति—**माययैवेति**। कस्मादि[३]त्थमवधार्यते। वास्तवे जन्मनि का वस्तुक्षतिरित्याशङ्क्याऽऽह—**न ह्यजेति**। आत्मैकत्वज्ञानमेव सृष्टिश्रुतितात्पर्यगम्यं सृष्टिस्तु तच्छेषत्वादविवक्षितेत्यत्र हेत्वन्तरमाह—**फलवत्त्वाच्चेति**। तस्य फलवत्त्वे प्रमाणमाह—**तत्रेति**। एकत्वमाचार्योपदेशमनुपश्यतः साक्षात्कुर्वतस्तत्रैकत्वसाक्षात्कारे सति शोकमोहोपलक्षितः संसारो न भवतीत्यर्थः। न केवलं विफलत्वाद्भेददृष्टिरविवक्षिता किं तु [४]निन्दितत्वेन निषिद्धत्वादनर्थक[५]रत्वाच्चेत्याह—**मृत्योरिति**॥ २४॥

**संभूतेरपवादाच्च संभवः प्रतिषिध्यते।**
**को न्वेनं जनयेदिति कारणं प्रतिषिध्यते॥ २५॥**

"अन्धं तमः प्रविशन्ति ये संभूतिमुपासते" इ[६]ति संभूतेरुपास्यत्वापवादात्संभवः प्रतिषिध्यते। न हि परमार्थतः संभूतायां संभूतौ तदपवाद उपपद्यते। ननु विनाशेन संभूतेः समुच्चयवि[७]ध्यर्थः संभूत्यपवादः। "यथाऽन्धं तमः प्रविशन्ति येऽविद्यामुपासते" इ[८]ति। सत्यमेव देवतादर्शनस्य संभूतिविषय[९]स्य विनाशशब्दवाच्य[१०]स्य कर्मणः समुच्चयविधानार्थः संभूत्यपवादः। तथाऽपि विनाशाख्यस्य कर्मणः स्वाभाविकाज्ञानप्रवृत्तिरूपस्य मृत्योरतितरणार्थत्वन्न देवतादर्शनकर्मसमुच्चयस्य पुरुषसंस्कारार्थस्य कर्मफलरागप्रवृत्तिरूपस्य साध्यसाधनैषणाद्वयलक्षणस्य मृत्योरतितरणार्थत्वम्। एवं ह्येषणाद्व[११]यरूपान्मृत्योरशुद्धेर्वियुक्तः पुरुषः संस्कृतः स्यादतो मृ[१२]त्योरतितरणार्था[१३] देवतादर्शनकर्मसमुच्चयलक्षणा ह्यविद्या। एवमेवैषणालक्षणादवि[१४]द्याया मृत्योरतितीर्णस्य विरक्तस्योपनिषच्छास्त्रार्थालोचनपरस्य नान्तरीयकी परमात्मैकत्वविद्योत्पत्तिरिति पूर्वभाविनीमविद्यामपेक्ष्य पश्चाद्भाविनी ब्रह्मविद्याऽमृतत्वसाधनै[१५]केन पुरुषेण संबध्यमानाऽविद्यया समुच्चीयत इत्युच्यते। अतोऽन्यार्थत्वादमृतत्वसाधनं ब्रह्मविद्यामपेक्ष्य निन्दार्थ एव भवति संभूत्यपवादः।

---

१ ज. 'रस्यापवादः स्या'। २ छ. 'पमेवार्थ'। ३ ग. झ. 'दित्यवतार्य'। ४ क. निस्यत्वेन। ५ ग. झ. 'कत्वा'। ६ क. 'ति श्रुतेः सं'। ७ च. 'विधानार्थः। ८ ज. 'ति। मैवं विना सत्यदे'। ९ ज. 'स्य शब्द'। १० ङ. 'स्य च क'। ११ क. 'यलक्षणाद'। १२ घ. मृत्युर'। १३ च. 'णाधि'। १४ क. 'विद्यया। १५ ख. च. 'धनमेके'।

यद्यप्यशुद्धिवियोगहेतुरतन्निष्ठत्वात् । अत एव संभूतेरपवादात्संभूतेरापेक्षिकमेव सत्त्वमिति । परमार्थसदात्मैकत्वमपेक्ष्यामृताख्यः संभवः प्रतिषिध्यते । एवं मायानिर्मितस्यैव जीवस्याविद्यया प्रत्युपस्थापितस्याविद्यानाशे स्वभावरूपत्वात्परमार्थतः को न्वेनं जनयेत् । न हि रज्ज्वामविद्यारोपितं सर्पं पुनर्विवेकतो नष्टं जनयेत्कश्चित् । तथा न कश्चिदेनं जनयेदिति को न्वित्याक्षेपार्थत्वात्कारणं प्रतिषिध्यते । अविद्योद्भूतस्य नष्टस्य जनयितृ कारणं न किंचिदस्तीत्यभिप्रायः । "नायं कुतश्चिन्न बभूव कश्चित्" इति श्रुतेः ॥ २५ ॥

भेददृष्टेर्मिथ्यात्वे हेत्वन्तरमाह—**संभूतेरिति** । सम्यग्भूतिरैश्वर्यं यस्याः सा संभूतिर्देवता हिरण्यगर्भाख्या । तस्याश्च कार्यमध्ये श्रेष्ठाया निन्दितत्वात्प्रधानमल्लनिबर्हणन्यायेन संभवशब्दितं कार्यमेव निषिध्यते । तथा च सिद्धं तस्यावस्तुत्वमित्यर्थः । कारणप्रतिषेधेन तदवस्तुत्वसिद्धेश्च यथोक्तार्थसिद्धिरित्याह—**को न्वेनमिति** । पूर्वार्धं व्याकरोति—**अन्धमिति** । संभूत्युपासनाया मन्त्रार्धेनाऽऽद्येन निन्दां विधाय ततो भूय इवेत्यादिनोत्तरार्धेन संभूतेरुक्ताया देवताया हेयत्वमुपपाद्यते । ततश्च प्रधानभूतदेवतोपास्यत्वापवादात्ततोऽर्वाक्तनं सर्वमेव संभवशब्दितं कार्यमात्रं निषिध्यते । तथा च तदवस्तुत्वसिद्धिरित्यर्थः । संभूतेरपवादेऽपि [10]तस्मिन्मिथ्यात्वनियमाभावान्न कार्यमात्रस्य मिथ्यात्वं शक्यं प्रतिज्ञातुमित्याशङ्क्याऽऽह —**न हीति** । संभूतिनि[11]न्दा तदवस्तुत्वख्यापनार्था न भवति । किं तु विनाशेन कर्मणा देवतोपासनस्य समुच्चयविध्यर्था । समुच्चयविधानस्य फल[12]वत्त्वादिति शङ्कते—[13]नन्विति । अपवादस्य समुच्चयविध्यर्थत्वे दृष्टान्तमाह—**यथेति** । अत्र खल्वविद्याशब्दितकर्मापवादो विद्याकर्मणोः समुच्चयविध्यर्थः स्थितो विद्यां चाविद्यां च यस्तद्वेदोभयं सहेति श्रवणादित्यर्थः । उक्तं चोद्यमनुजानाति—**सत्यमिति** । तर्हि संभूत्यपवादस्तदवस्तुत्वख्यापको न भवतीत्युक्तं स्थितमेवेत्याशङ्क्य समुच्चयस्याविद्यावस्थायामवस्थितफलवत्त्वाद्यदवस्तुत्वं संभूत्यादे[15]र्निन्दाधीनमुक्तं [16]तत्तदवस्थमेवेति मन्वानः सन्नाह—**तथाऽपीति** । यथाऽग्निहोत्रादेः शास्त्रीयस्य कर्मणोऽशा[17]स्त्रीयप्रवृत्तिरूपमृत्युतरणार्थत्वं तथा साधनाद्येषणारूपमृत्युतरणार्थत्वं समुच्चयस्यापि

---

१ झ. सत्यमि° । २ ङ. झ. °क्ष्यानृता° । ३ च. °नाशे भाव° । घ. °नाशः स्व° । ४ घ. ङ. च. छ. ज. °द्याध्यारो° । ५ ख. °पितस° । ६ झ. °श्चिन्न क° । ७ ख. °श्वर्यं य° । ८ ग. झ. °र्धेन नि° । ९ ज. °ब्दितका° । १० ख. ग. छ. झ. तन्मि° । ११ क. °तिर्निन्दा । १२ ग. घ. झ. °लत्वा° । १३ क. न हीति । १४ ग. झ. °दस्तव° । १५ ग. झ. °र्निषेधाधी° । १६ ग. झ. तद° । १७ ख. ग. झ °त्तिस्वरू° ।

वाच्यम्। तथा च संभूत्यादेरवस्तुत्वमविरुद्धमित्यर्थः। मृत्युतरणार्थत्वे संस्कारार्थत्वं कथमित्याशङ्क्याऽऽह—एवं हीति। कामचार[1]कामवाद[2]काममक्ष[3]णादिलक्षणस्वाभाविकप्रवृत्तिरूपा[4]शुद्धिवियोगः संस्कारो यथा नित्याग्निहोत्रादिफलं तथा निष्कामेनानुष्ठितसमुच्चयफलं कामाख्याशुद्धिव्यावृत्तिरित्यर्थः। अविद्यया मृत्युं तीर्त्वेति मन्त्रे मृत्युतरणहेतुरविद्येति श्रवणात्। संभूत्याऽमृतमश्नुत इति च संभूतेरमृतत्वफलाभिलाषात्कथं समुच्चयफलं मृत्योरतितरणमित्याशङ्क्याऽऽह—अत इति। यतो न समुच्चयान्मुख्यममृतत्वं घटते तस्य विद्ययाऽमृत[5]मश्नुत इति वक्ष्यमाणत्वात्। अतः समुच्चयलक्षणाऽविद्याऽविद्यया मृत्युं तीर्त्वेत्य[6]त्र निर्दिश्य[7]ते। आपेक्षिकमृत्युतरणहेतुत्वसंभवादित्यर्थः। यद्य[8]विद्याशब्देन समुच्चयो विवक्ष्यते। कथं तर्हि विद्यां चाविद्यां चेत्यनेन विद्याविद्ययोः समुच्चयो निर्दिश्यते। न हि देवतादर्शनकर्मसमुच्चयस्य ब्रह्मविद्याया[9][10]: समु[11]च्चयः संभवतीत्याशङ्क्याऽऽह—एवमिति। नान्तरीयकत्वमवश्यंभावित्वं प्रतिबन्धकाभावे कार्योत्पत्तेरु[12]पपत्तेरित्यर्थः। एवं मन्त्रार्थे स्थिते प्रकृते फलितमाह—अत इति। [13]अन्यार्थत्वं समुच्चयस्याशु[14]द्धिक्षयहेतुत्वं तच्चे[15]दिष्टं किमित्यपवादस्तत्राऽऽह—यद्यपीति। तथाऽप्यतन्निष्ठत्वात्परमार्था[16]मृतत्वफल[17]त्वाभावात्तदपवादसिद्धिरित्यर्थः। अपवादफलं दर्शयन्नाद्यभागविभजनमुपसंहरति—अत एवेति। को न्वेनं जनयेत्पुनरिति श्रुत्यर्थमाचक्षाणो द्वितीयार्धं विभजते—एवं मायेत्यादिना। उक्तमर्थं दृष्टान्तेन स्पष्टयति—न हीति। न कश्चि[18]दनं जनयेदिति कारणं प्रतिषिध्यत इति संबन्धः। प्रश्नार्थे किंशब्दे दृश्यमाने कथं कारणप्रतिषेधसिद्धिरित्याशङ्क्याऽऽह—को[19] न्विति। अक्षरार्थमुक्त्वा द्वितीयार्धस्य तात्पर्यमाह—अविद्येति। ततश्चेदुद्भूतो जीवः कथं तस्य जनयितृ कारणं नेत्युच्यते व्याघातादित्याशङ्क्याऽऽह—नष्टस्येति। जीवस्य जनयितृकारणाभावे प्रमाणमाह—नायमिति। तस्याविद्यामन्तरेण स्वतो जन्माभावं सूचयति—न बभूवेति ॥ २९ ॥

**स एष नेति नेतीति व्याख्यातं निह्नुते यतः।**
**सर्वमग्राह्यभावेन हेतुनाऽजं प्रकाशते ॥ २६ ॥**

---

१ ग. ज. झ. °रवा°। २ ग. घ. झ. °दम°। ३ छ. °क्षणस्वा°। ४ घ. °रूपासिद्धि°। ङ. °रूपविशु°। ५ ग. °तत्वम°। ६ घ. ङ. ज °त्यत्राविद्या नि°। ७ क. °ते। अपेक्षितमृ°। ८ क. °द्यपि वि°। ९ ग. झ. °विद्यया श°। १० ग झ. °विद्यया स°। ११ ख. °च्चयत्वं सं°। १२ क. °त्तेरि°। १३ ग. झ. अन्यथार्थ°। १४ क. छ. °द्धिक्षेपहे°। १५ ग. °चेदमिष्टं। १६ क. °र्थोमृत°। १७ ख. ग. छ. ज. °लवत्त्वाभा°। १८ क. °देवं ज°। १९ घ. ज. कोन्वेति। ग. छ. कोन्विनीति।

सर्वविशेषप्रतिषेधेन "अर्थात[1] आदेशो नेति नेति" इति प्रतिपादितस्याऽऽत्मनो दुर्बोध्यत्वं[2] मन्यमाना श्रुतिः पुनः पुनरुपायान्तरत्वेन तस्यैव प्रतिपिपादयिषया यद्यद्व्याख्यातं तत्सर्वं निह्नुते । ग्राह्यं जनिमद्बुद्धिविषयमपलपत्यर्थात् "स एष नेति नेति" इत्यात्मनोऽदृश्यतां दर्शयन्ती[3] श्रुतिरुपायस्योपेयनिष्ठतामजानत[4] उपायत्वेन व्याख्यातस्योपेयवद्ग्राह्यता मा भूदित्यग्राह्यभावेन हेतुना कारणेन निह्नुत इत्यर्थः । ततश्चैवमुपायस्योपेयनिष्ठतामेव[5] जानत उपेयस्य च नित्यैकरूपत्वमिति तस्य सबाह्याभ्यन्तरमजमात्मतत्त्वं प्रकाशते स्वयमेव ॥ २६ ॥

इतोऽपि द्वैतं वस्तु न भवतीत्याह—**स एष इति**[6] । द्वे वावेत्यादिना व्याख्यातं मूर्तामूर्तादि सर्वमेव[7] त्याज्यमग्राह्यं नेति नेतीति वीप्सया यतो निषेधति श्रुतिरतः स एष इत्युपक्रम्य प्रतिपादितस्याऽऽत्मतत्त्वस्य कूटस्थस्याविषयत्वेन प्रथोपपत्तिरित्यर्थः[8] । नेति नेतीतिवीप्सातात्पर्यमाह—**सर्वेति** । रूपद्वयोपन्यासानन्तरं तन्निषेधमन्तरेण निर्विशेषवस्तुप्रतिपत्तेरयोगात्तत्प्रतिपत्त्या च पुरुषार्थपरिसमाप्तिसंभवादादेशो निर्विशेषस्याऽऽत्मतत्त्वस्योपदेशस्तावत्प्रस्तूयते[9] । एवं प्रस्तुत्य नेति नेतीति[10] वीप्सया सर्वस्य मूर्तामूर्तादिविशेषस्याऽऽरोपितस्य[11] निषेधो दर्शितस्तेन चाऽऽत्मा जिज्ञासितो[12] विशिष्टो निर्दिष्ट[13] इत्यर्थः । स चेदेवं मूर्तामूर्ताधिकारे प्रतिपादितस्तर्हि किमिति प्रदेशान्तरे[14] पुनः[15] पुनरेवं प्रतिपाद्यते पुनरुक्तेरित्याशङ्क्य व्याख्यातमित्यादि व्याचष्टे—**प्रतिपादितस्येति** । यद्यपि मूर्तामूर्तप्रकरणे प्रतिपादितमात्मतत्त्वं तथाऽपि तस्य परमसूक्ष्मत्वाद्दुर्ज्ञानत्वं मन्यते श्रुतिः । सा पुनरुपायविशेषसद्भावाभिप्रायेण तस्यैव पुनः[16] पुनः प्रतिपादनेच्छया यद्यदारोपितं[17] तत्तदशेषमपह्नुत्यर्थ्यावशिष्टमात्मस्वरूपं[18][19] निवेदयतीत्यर्थः । सर्वमित्यादि स्पष्टीकुर्वाणः स एष इति व्याचष्टे—**ग्राह्यमिति** । स एष इत्याद्या श्रुतिरदृश्यतामात्मनो विशेषं निषेधमुखेन दर्शयन्ती यद्दृश्यं कार्यं मनसां वाचां[20] च गोचरीभूतं तदशेषमर्थादपलपति । सा हि परमार्थवस्त्वदृश्यमिति[21] ब्रुवाणा दृश्यस्य[22] वस्तुत्वेनोपपद्यते तथा चानुपपत्तेर्दृश्यवर्गस्यावस्तुत्वं सिद्धमित्यर्थः[23] । ननु[24] किमिति श्रुतिर्व्या-

---

१ ख. घ. ङ. च. छ ज. झ. °थातोऽदे° । २ च. दुर्बोधत्वं । ३ घ. ज. °यति श्रु° । ४ घ. °निष्ठा ता° । ५ ज. °श्चैवोपा° । ६ ङ. °ति । द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेत्यादि° । ७ घ. ङ. ज. सर्वे त्याः । ८ क. प्रथमोपप° । ग. झ. प्रतिपत्ति° । ९ क. °तत्त्वोप° । १० झ. नेति । ११ ग. मूर्तादि° । १२ घ. ङ. ज. °तोऽवशि° । १३ ज. °ष्ट इष्ट इ° । १४ क. प्रवेशा° । १५ छ. °रे तर्हि पु° । १६ घ. ज. °नः प्र° । १७ ख. ग. ज. °पितमुक्तं त° । छ. °पितमुक्तं तद्° । १८ ग. छ. झ. °त्या विशि° । १९ झ. °त्मरू° । २० झ. °चां गो° । २१ क. °र्थंतस्त्व° । २२ ग. °श्यव° । २३ ग. °र्थः ॥ २५ ॥ न° । २४ ग. °ति व्याख्या° ।

ख्यातं विशेषजातं निह्नुते पङ्कप्रक्षालनन्यायापातादित्याशङ्क्याग्राह्यभावेनेत्यादि व्याकरोति—उपायस्येति। द्वे वावेत्यादिना व्याख्यातस्य रूपप्रपञ्चस्याद्वितीयब्रह्मात्ममात्रपर्यवसायितामप्रति[1]पद्यमानस्य ब्रह्मवेदेवोपायत्वेनाभिम[2]तस्यापि प्रपञ्चस्य वस्तुत्वेन ग्राह्यत्वाशङ्का या सा मा भूदित्यशे[3]षविशेषराहित्येनाद्वितीयब्रह्म[4]स्वरूपनिर्धारणार्थमारोपितं प्रपञ्चं प्रतिषेधति श्रुतिरित्यर्थः। उपायस्य कल्पितत्वेन वस्तुत्वाभावादुपेयस्य[5] च सदैकरूपत्वात्कथं तथाविधवस्तुप्रतिपत्तिरित्याशङ्क्याजमित्यादि व्याचष्टे—तत[6]श्चेति। समारोपितस्य सर्वस्य निषेधादेव स्वातन्त्र्येण वस्तुत्वाभावनिश्चयादारोपितसर्पादेरधिष्ठानातिरेकेणासत्त्ववदुपायस्य मूर्तादेरुपेयाद्वितीयब्रह्ममात्रतामेव [7]प्रतिपद्यमानस्य ब्रह्मणश्च [8]सदैकरूपत्वकूटस्थनित्यदृष्टिस्वभावत्वादि जानतस्तस्योत्तमस्याधिकारिणः स्वयमेवान्यापेक्षामन्तरेणाऽऽत्मतत्त्वमुक्तविशेषणं प्रका[9]शी भवति। कल्पित[10]स्य चोपायत्वं प्रतिबिम्बादिवदविरुद्धमित्यर्थः॥ २६॥

**सतो हि मायया जन्म युज्यते न तु तत्त्वतः।**
**तत्त्वतो जायते यस्य जातं तस्य हि जायते॥२७॥**

एवं हि श्रुतिवाक्यशतैः सबाह्याभ्यन्तरमजमात्मतत्त्वमद्वयं न ततोऽन्यदस्तीति [11]निश्चितमेतत्। युक्त्या चाधुनैतदेव पुनर्निर्धार्यत इत्याह। तत्रै[12]तत्स्यात्सदाऽग्राह्यमेव चेदसदेवाऽऽत्मतत्त्वमि[13]ति। तन्न। कार्यग्रहणात्। यथा[14] सतो मायाविनो मायया जन्मका[15]र्यम्। एवं जगतो जन्मकार्यं गृह्यमाणं मायाविनमिव परमा[16]र्थसन्तमात्मानं जग[17]ज्जन्म मायास्पर्द[18]मवगमयति। यस्मात्सतो हि विद्यमानात्कारणान्मायानिर्मितस्य हस्त्यादिकार्यस्येव जगज्जन्म युज्यते नासतः कारणात्। न तु तत्त्वत एवाऽऽत्मनो[19] जन्म युज्यते। अथ वा सतो विद्यमानस्य वस्तुनो रज्ज्वादेः सर्पादिवन्मायया जन्म युज्यते न तु तत्त्वतो यथा तथाऽग्राह्यस्यापि सत एवाऽऽत्मनो रज्जुसर्पवज्जगद्रूपेण मायया जन्म युज्यते। न तु तत्त्वत एवाजस्याऽऽत्मनो जन्म। यस्य पुनः परमा[20]र्थसदजमात्मतत्त्वं जगद्रूपेण जायते वादिनो न हि तस्याजं जायत इति शक्यं वक्तुं विरो-

---

१ क. ङ. °तिपद्य°। २ ग. छ. °तप्रप°। झ. °तस्य प्र°। ३ ख. घ. झ. °षरा°। ४ ग. छ. झ. °ह्मरू°। ५ झ. °स्य सर्वस्य च। ६ झ. °ति। संसारारो°। ७ ख. °तिपाद्य°। ८ क. छ. झ. सदेक°। ९ क. °काशि भ°। १० छ. °तस्योपा°। ११ छ. निश्चयापित°। १२ छ. °तस्मात्स°। १३ च. °ति चेन्न। १४ घ. °था हि विद्यमानात्कारणात्सतो°। १५ च. °कार्यं गृ°। १६ क. छ. °मार्थं स°। १७ क. छ. °जन्ममा°। १८ क. °दमेव। १९ च. °नो यु°। २० घ. °मार्थं स°।

**धात्। ततस्तस्यार्थाज्जातं जायत इत्यापन्नं ततश्चानवस्था[1] जाताज्जायमानत्वेन। तस्मादजमेकमेवा[2]ऽऽत्मतत्त्वमिति सिद्धम् ॥ २७ ॥**

आत्मतत्त्वमजमद्वितीयं परमार्थभूतम्। द्वैतं तु मायाकल्पितमसदिति प्रतिपादितम्। तत्रैव हेत्वन्तरमाह—**सतो हीति**। यदात्मतत्त्वं सदा [3]सदेकरूपं तस्या मायाया जगदाकारेण जन्म युक्तम्। मायाया दुर्निरूपार्थसमर्थनपटीयस्त्वात्परमार्थतस्त्वेकरूपमनेकरूपतया नोत्पत्तुं पारयति विरोधादित्यर्थः। विपक्षे दोषमाह—**तत्त्वत इति**। यस्य वादिनो मते ब्रह्मैव परमार्थतो जगदात्मना जायते तस्याजस्य जायमा[4]नत्वप्रतिज्ञाया व्याहतत्वाज्जातस्यैव जायमानत्वे स्यादनवस्थेत्यर्थः। अद्वैतमावेदयन्त्या द्वैतनिषेधकश्रुत्या दृश्यत्वजडत्वादियुक्त्या च तथाविधया निर्धारितमर्थं श्लोकाक्षरार्थकथनार्थमनुवदति—**एवमिति**। उक्तमेव वस्तु युक्त्यन्तरेण पुनर्निर्धारयितुमुत्तरग्रन्थप्रवृत्तिरित्याह—**अधुनेति**। पूर्वार्धं शङ्कोत्तरत्वेन व्याख्यातुं शङ्कयति—**तत्रेति**[5]। श्लोकः सप्तम्या परामृश्यते। [6]यन्न कदाचिदपि गृह्यते तदत्यन्तासदेव शशविषाणादिवदेष्टव्यं प्रमाणाभावे प्रमेयासि[7]द्धेरित्यर्थः। कार्यलि[8]ङ्गकानुमानवशादात्मतत्त्व[9]स्य कारणत्वेन सत्त्वनिर्णयान्ना[10]सत्त्वं चोद्यमिति दूषयति—**तन्नेति**। संगृहीतमर्थं दृष्टान्तेन विवृणोति—**यथेति**। विमतं सदधिष्ठानं कार्यत्वात्संप्रतिपन्नवदित्यर्थः। उक्तेऽर्थे पूर्वार्धाक्षराणि योजयति—**यस्मादिति**। तस्मात्कारणस्य सत्त्वमविवादमिति शेषः। नासत इति तस्य निःस्वभावत्वात्कारणत्वायोगादित्यर्थः। **न त्विति**। तथाभूतस्यान्यथाभूतस्य च [11]जन्मायोगादित्यर्थः। सत इति पञ्चम्यन्तं पदं गृहीत्वा निमित्तकारणपरतया व्याख्यातम्। संप्रति सत इति षष्ठ्यन्तं पदमादायोपादानपरतया व्याख्यां करोति—**अथ वेति**। यथा रज्जोः सर्पधाराद्याकारेण मायाकृतं जन्म तथैवाग्राह्यस्यापि सद्रूपस्याऽऽत्मतत्त्वस्य जगदात्मना जन्म मायाप्रयुक्तं प्रतिपत्तव्यम्। जन्मरहितस्य [12]वस्तुतो जन्मव्याघातादित्यर्थः। उत्तरार्धं विभजते—**यस्येत्यादिना**। मायिकं जन्म न तात्त्विकमिति स्थिते फलितमाह—**तस्मादिति** ॥ २७ ॥

**असतो मायया जन्म तत्त्वतो नैव युज्यते।**
**व[13]न्ध्यापुत्रो न तत्त्वेन मायया वाऽपि जायते ॥२८॥**

---

१ क. छ. 'स्थापाता'। २ च. 'जमेवा'। ३ घ. ङ. ज. सदैक'। ४ ज. 'नस्य प्र'। ५ ख. छ. 'ति। पूर्वश्लो'। ६ क. यत्र क'। ७ ग. घ. झ. 'सिद्धिरि'। ८ ग. झ. 'लिङ्गानु'। ९ क. 'त्वस्याका'। १० क. ङ. 'सत्त्वचो'। ११ ग. ज. जन्मयो'। १२ घ. ज. वस्तुनो। १३ च. 'न्ध्यासुतो न।

असद्वादिनामसतो भावस्य मायया तत्त्वतो वा न कथंचन जन्म युज्यते । अदृष्टत्वात् । न हि वन्ध्यापुत्रो मायया तत्त्वतो वा जायते तस्मादत्रासद्वादो दूरत एवानुपपन्न इत्यर्थः ॥ २८ ॥

सत्पूर्वकं कार्यमिति न व्याप्तिः । असद्वादिभिरसतः सज्जन्माभ्युपगमादित्याशङ्कयाऽऽह—असत इति । तत्त्वतोऽतत्त्वतो वा नासतः सदाकारेण जन्मेत्यर्थः । तत्र दृष्टान्तमाह—वन्ध्येति । पूर्वार्धं व्याकरोति—असद्वादिनामिति । असतो निःस्वरूपस्य स्वरूपाभावादेव तत्त्वतोऽतत्त्वतो वा कार्याकारेण न युक्तं जन्मेत्यत्र हेतुमाह—अदृष्टत्वादिति । उत्तरार्धं व्याकुर्वन्नदृष्टत्वमेव दृष्टान्तेन स्पष्टयति—न हीति । सद्वादो मायया संभवति । असद्वादस्तु तयाऽपि नेति विशेषं दर्शयन्नुपसंहरति—तस्मादिति । कार्यकारणनिरूपणमत्रेति परामृश्यते ॥ २८ ॥

यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः ।
तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः ॥ २९ ॥

कथं पुनः सतो माययैव जन्मेत्युच्यते । यथा रज्ज्वां विकल्पितः सर्पो रज्जुरूपेणावेक्ष्यमाणः सन्नेवं मनः परमार्थविज्ञप्त्याऽऽत्मरूपेणावेक्ष्यमाणं सद्ग्राह्यग्राहकरूपेण द्वयाभासं स्पन्दते स्वप्ने मायया रज्ज्वामिव सर्पः । तथा तद्वदेव जाग्रज्जागरिते स्पन्दते मायया मनः स्पन्दत इवेत्यर्थः ॥ २९ ॥

सत्तत्त्वस्यैव मायया जन्मेत्युक्तमुपपादयति—यथेति । सत एव मायया जन्मेत्युक्तम् । अवस्थाद्वयेऽपि द्वैतस्य मनःस्पन्दितत्वस्वीकारादिति श्लोकव्यावर्त्यं चोद्यमुत्थापयति—कथमिति । अधिष्ठानरूपेण मनोऽपि सदिति सदृष्टान्तमुत्तरमाह—उच्यत इति । मनसः सन्मात्रत्वेऽपि कथमनेकधा स्पन्दनमित्याशङ्क्य स्वप्नदृष्टान्तं व्याचष्टे—ग्राह्येति । दार्ष्टान्तिकमाह—तथेत्यादिना । मायाधीनं मनःस्पन्दनमवस्तुभूतमिति द्योतयितुमिवेत्युक्तं मनो ब्रह्म चेति कारणद्वयम् ॥ २९ ॥

अद्वयं च द्वयाभासं मनः स्वप्ने न संशयः ।
अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥ ३० ॥

---

१ ङ. ज. 'दिनां तु अस' । २ क. 'दस' । ३ घ. 'द्वादा दू' । ४ घ. 'पन्ना इ' । ५ छ. ज. 'तो वा । ६ घ. 'ष्टमे' । ७ ङ. ज. 'यं पारमार्थ्यविद्दृष्टयात्म' । ८ घ. 'नः पारमार्थ्यविद्वद्दृष्टयात्म' । ९ ख. 'र्थदृष्टयात्म' । १० ग. छ. झ. 'त्वे क' । ११ ग. झ. 'स्पन्दितम' । १२ झ. द्योतितामि' ।

रज्जुरूपेण सर्प इव परमार्थत आत्मरूपेणाद्वयं सद्वयाभासं मनः स्वप्ने न संशयः। न हि स्वप्ने हस्त्यादि ग्राह्यं तद्ग्राहकं वा चक्षुरादि-द्वयं विज्ञानव्यतिरेकेणास्ति। जाग्रदपि तथैवेत्यर्थः। परमार्थसद्विज्ञान-मात्राविशेषात् ॥ ३० ॥

तर्हि द्वैतस्य स्वीकृतमित्याशङ्क्य दृष्टान्तेन निराचष्टे—अद्वयं चेति। दृष्टान्तभागं विभजते—रज्ज्वति। दृष्टान्ते चैतन्यातिरिक्तस्य ग्राह्यग्राहकभेदस्य मनःस्पन्दितै-स्यासत्त्वं साधयति—न हीति। तथैव जागरितेऽपि परमार्थात्मस्वरूपेणाद्वयं सन्मनो ग्राह्यग्राहकद्वैताकारेणावभासते। तथा च परमार्थसतो विज्ञानमात्रस्यावस्थाद्वयेऽपि विशेषाभावात्तस्मिन्नेवाधिष्ठाने मायाकल्पितं मनः स्पन्दते। द्वयाकारमित्यङ्गीकारात्। न कारणद्वयं शङ्कितव्यमित्याह—जाग्रदपीति ॥ ३० ॥

## मनोदृश्यमिदं द्वैतं यत्किंचित्सचराचरम्।
## मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥ ३१ ॥

रज्जुसर्पवद्विकल्पनारूपं द्वैतरूपेण मन एवेत्युक्तम्। तत्र किं प्रमा-णमित्यन्वयव्यतिरेकलक्षणमनुमानमाह। कथं तेन हि मनसा विकै-ल्प्यमानेन दृश्यं मनोदृश्यमिदं द्वैतं सर्वं मन इति प्रतिज्ञा। तद्भावेभावा-त्तदभावेऽभावात्। मनसो ह्यमनीभावे निरुद्धे(रोधे) विवेकदर्शनाभ्या-सवैराग्याभ्यां रज्ज्वामिव सर्पे लयं गते वा सुषुप्ते द्वैतं नैवोपलभ्यत इत्यभावात्सिद्धं द्वैतस्यासत्त्वमित्यर्थः ॥ ३१ ॥

मनोमात्रं द्वैतमित्यत्र प्रमाणमाह—मनोदृश्यमिति। वृत्तमनूद्य श्लोकतात्पर्य-माह—रज्ज्वति। यथा रज्जुः सर्परूपेण विकल्पते तथा मनो द्वैतरूपेण विकल्पना-त्मकम्। तच्चाविद्याकल्पितमित्युक्तेऽर्थे प्रमाणगवेषणायां विशिष्टमनुमानमुपन्यस्यती-त्यर्थः। तदेव प्रश्नपूर्वकं प्रकटयन्प्रथमार्धाक्षराणि व्याचष्टे—कथमित्यादिना। विमतं मनोमात्रं तद्भावे नियतभावत्वात्। यथा मृद्भावे नियतभावो मृन्मात्रो घटादिरित्यनुमा-नमाचरयति—द्वैतमिति। उक्तमेव व्यतिरेकं स्फोरयन्द्वितीयार्धं विभजते—मनसो हीति। समाधिस्वापयोर्द्वैतस्यानुपलम्भेऽपि नासत्त्वमित्याशङ्क्य मानाधीना मेयसिद्धि-रित्यभिप्रेत्याऽऽह—इत्यभावादिति ॥ ३१ ॥

---

१ क. सत्तद्द्र°। २ क. °ह्यं ग्राहकं च°। ३ ग. घ. ज. झ. °तत्त्वं सा°। ४ क. °पेण द्व°। ५ ङ. छ. °कल्पमा°। ६ झ. °वे चाभा°। ७ छ. °मात्रमिदं द्वै°। ८ छ झ. °माणान्वेष°। ९ झ. °माचरति। १० ग. झ. स्फोटय°।

आत्मसत्यानुबोधेन न संकल्पयते यदा ।
अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥ ३२ ॥

कथं पुन[1]रमनीभाव इति । उच्यते । आत्मैव सत्यमात्मसत्यं मृत्तिकावत् । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इतिश्रुतेः । तस्य शास्त्राचार्योपदेश[2]मन्ववबोध आत्मसत्यानुबोधः । तेन संकल्प्याभा[3]वतया न सं[4]कल्पयते[5] । दाह्याभावे ज्वलनमिवाग्नेः । यदा यस्मिन्काले तदा[6] तस्मिन्कालेऽमनस्तामम[7]नोभावं याति ग्राह्याभावे तन्मनोऽग्रहं ग्रहणविकल्पनावर्जितमित्यर्थः ॥ ३२ ॥

मनसो यदमनस्त्वमुक्तं तदुपपादयति—**आत्मेति** । समाधिस्वापयोरननुभवेऽपि मनसः स्वरूपेण नित्यत्वान्नामनस्त्वमित्याक्षिपति—**कथमिति** । संकल्पो हि मनसो व्यावहारिकं रूपम् । संकल्पश्च संकल्प्यापेक्षत्वात्तदभावे न भवति । [8]सर्वमात्मैवेत्यवगमे च संकल्प्याभावान्मनसो मनस्त्वं न वर्तते तथाऽपि स्फुरति चेदात्मैवेति न वि[9]वेकिदृष्ट्या मनो नामास्तीति श्लोकाक्षरैरुत्तरमाह—**उच्यत इति** । तस्यैव सत्यत्वे दृष्टान्तमाह—**मृत्तिकावदिति** । यथा घटशरावादिष्वसत्येषु मृत्तिकामात्रमनुस्यूतं सत्यमिष्यते तथैवानात्मस्वसत्येष्वात्ममात्रं सत्यमेष्टव्यम् । तत्सत्यमित्यवधारणादेवकारस्य दृष्टान्तनिविष्टस्य दार्ष्टान्तिकेऽनुषङ्गादित्यर्थः । उ[10]क्ते दृष्टान्ते प्रमाणमाह—**वाचारम्भणमिति** । अवशि[11]ष्टान्यक्षराणि व्याचष्टे—**तस्येत्यादिना** । तेन तत्त्वज्ञानेनाऽऽत्मातिरिक्तार्थाभावे निश्चिते सं[12]कल्पविषयाभावनिर्धारणया सं[13]कल्पाभावे दृष्टान्तमाह—**दाह्येति** । यथाऽग्नेर्दाह्याभावे ज्वलनं न भवति तथा संकल्प्याभावे संकल्पो निरवकाशः स्यादित्यर्थः । [14]संकल्प्याभावे किं मनसो भवति तदाह—**यदेति** ॥ ३२ ॥

अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते ।
ब्रह्मज्ञेयमजं नित्यमजेनाजं विबुध्यते ॥ ३३ ॥

[15]यद्यसदिदं द्वैतं के[16]न स्वमजसमा(जमा)त्मतत्त्वं विबुध्यत इति । उच्यते । अकल्पकं सर्वकल्पनावर्जितमत एवाजं ज्ञानं ज्ञप्तिमात्रं ज्ञेयेन परमार्थसता ब्रह्मणाऽभिन्नं प्रचक्षते कथयन्ति ब्रह्मविदः । न [17]हि विज्ञातुर्वि-

---

१ क. °रयं म° । २ ख घ. ज. °मनुबो° । ३ क. °भावात्तया । ४ क. °कल्प्यते । ५ ङ. च. छ. °ते यदा दाह्या° । झ. °ते यदा यथा दा° । ६ ख. °दाऽम° । ७ ख. °मनीभा° । ८ क. सर्वात्मै° । ९ ग. झ. °वेकदृ° । १० घ. ङ. ज. उक्तदृ° । ११ ग. छ. झ. °ष्टाक्ष° । १२ ग. छ. झ. °कल्प्यवि° । १३ घ. ङ. छ. °कल्प्याभा° । १४ ग. झ. संकल्पाभावे । १५ च. °तं तर्हि के° । १६ क. °न संमज्ञसमा° । १७ ज. हि ज्ञा° ।

ज्ञातेर्विपरिलोपो विद्यतेऽग्न्युष्णवत्। "विज्ञानमानन्दं ब्रह्म"[1]। "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिभ्यः। तस्यैव विशेषणं ब्रह्म ज्ञेयं यस्य स्वस्य[2] तदिदं ब्रह्मज्ञेयमुष्णस्येवाग्निवदभिन्नम्[3]। तेनाऽऽत्मस्वरूपेणाजेन[4] ज्ञानेनाजं ज्ञेयमात्मतत्त्वं स्वयमेव विबुध्यतेऽवगच्छति नित्यप्रकाशस्वरूप इव सविता। नित्यविज्ञानैकरसघनत्वान्न ज्ञानान्तरमपेक्षत इत्यर्थः॥३३॥

मनसश्चेन्मनस्त्वं व्यावर्तते[5] तर्हि कथमात्मनोऽवबोधो व्यञ्जकाभावादित्याशङ्क्याऽऽह—अकल्पकमिति। श्लोकव्यावर्त्यां[6] शङ्कामाह—यदीति। मनोमुख्यस्य द्वैतस्यासत्त्वे[7] व्यञ्जकाभावान्नाऽऽत्मबोधः[8] संभवति। मनसैवानुद्रष्टव्यमिति श्रुतेः। मनसश्चासत्त्वाङ्गीकारादित्यर्थः। स्वरूपभूतेन ज्ञानेनैवाऽऽत्मनोऽवबोधसंभवान्नातिरिक्ते मनस्यपेक्षेत्युत्तरमाह—उच्यत इति। ज्ञेयाभिन्नं ज्ञानमित्यत्र श्रुतीरुदाहरति[9]—न हीति। सत्यग्नौ तदात्मकमौष्ण्यं न परिलुप्यते[10] तथेत्युत्तरमाह—अग्न्युष्णवदिति। प्रज्ञानं ब्रह्मेत्यादिश्रुतिसंग्रहार्थमादिपदम्। ज्ञेयाभिन्नमित्युक्तं स्फुटयति—तस्यैवेति। आत्मनः स्वयमेवावगतिरूपत्वान्नार्थान्तरापेक्षेत्येतमर्थं दृष्टान्तेन स्फुटयति—नित्येति॥३३॥

## निगृहीतस्य मनसो निर्विकल्पस्य धीमतः।
## प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः॥३४॥

आत्मसत्यानुबोधेन[11] संकल्पमकुर्वद्बाह्यविषयाभावे[12] निरिन्धनाग्निवत्प्रशान्तं निगृहीतं निरुद्धं मनो भवतीत्युक्तम्। एवं च मनसो ह्यमनीभावे द्वैताभावश्चोक्तः। तस्यैवं[13] निगृहीतस्य निरुद्धस्य मनसो निर्विकल्पस्य सर्वकल्पनावर्जितस्य[14] धीमतो विवेकवतः प्रचरणं प्रचारो यः स तु प्रचारो[15] विशेषेण ज्ञेयो योगिभिः। ननु सर्वप्रत्ययाभावे यादृशः सुषुप्त[16][17][18]स्थस्य मनसः प्रचारस्तादृश एव निरुद्धस्यापि प्रत्ययाभावाविशेषात्किं तत्र विज्ञेयमिति[19]। अत्रोच्यते। नैवम्[20]। यस्मात्सुषुप्तेऽन्यः[21] प्रचारोऽविद्यामोहतमोग्रस्तस्यान्तर्लीनानेकानर्थप्रवृत्तिबीजवासनावतो[22] मनस आ-

१ ज. ब्रह्म" इ°। २ क. छ. स्वस्थं। ३ क. ग. झ. °यमौष्ण्यस्ये°। ४ ख. °जेना°। ५ ख. °वर्त्यते। ६ छ. °वर्त्यामा°। ७ ग. झ. °सत्यत्वे व्य°। ८ ख. °न्नाऽऽत्मावबो°। ९ ग. छ. श्रुतिमुदा°। १० ग. झ. न विलु°। ख. छ. न विप°। ११ क. °नुरोधे°। च. °नुबाधे°। १२ ङ. ज. झ. °र्वन्बाह्य°। १३ च. तस्यैव। १४ झ. सर्वसंक°। १५ क. °चारं वि°। १६ च. सुप्तस्य। ज. सुप्तस्थानस्य। १७ क. °षुप्तिस्थ°। १८ छ. °प्तम°। १९ च. °ति चेदत्रो°। २० च. मैवम्। २१ झ. °प्तेऽन्यप्र°। २२ घ. ज. °कार्थं°।

त्मसत्यानुबोधहुताशविप्लुष्टाविद्याद्यनर्थप्रवृत्तिबीजस्य निरुद्धस्यान्य एव प्रशान्तसर्वक्लेशरजसः स्वतन्त्रः प्रचारः। अतो न तत्समः। तस्माद्युक्तः स विज्ञातुमित्यभिप्रायः॥ ३४॥

मोक्षमाणस्य ज्ञानफलं स्वर्गवन्न परोक्षं किं तु तृप्तिवत्प्रत्यक्षम्। अतश्च प्रकृतज्ञानफलस्य मनोनिरोधस्य प्रत्यक्षत्वार्थं प्रसङ्गं प्रकरोति—निगृहीतस्येति। न तस्य विज्ञेयत्वं सुषुप्ते प्रसिद्धत्वादित्याशङ्क्याऽऽह—सुषुप्त इति। श्लोकाक्षराणि व्याकर्तुं वृत्तं कीर्तयति—आत्मेति। तस्य सत्यस्य प्रागुक्तेनानुबोधेन सम्यग्ज्ञानेन बाह्यस्य विषयस्य संकल्प्यस्याभावे निरालम्बनस्य प्रचारासंभवे च मनः संकल्पमकुर्वत्प्रशान्तं निरुद्धं च प्रभवतीत्यन्वयः। निर्विषयं मनः शाम्यतीत्यत्र दृष्टान्तमाह—निरिन्धनेति। निरुद्धे मनसि मनस्त्वव्यावृत्तौ मनःस्पन्दितस्य द्वैतस्याभावमुक्तं स्मारयति—एवं चेति। एवं वृत्तमनूद्य पादत्रयस्यार्थमाह—तस्येति। एवं विषयाभावेनेति यावत्। आत्मसत्यानुबोधो विवेकशब्दार्थः। प्रत्यगात्मन्येव पर्यवसानं प्रचारस्तस्य विद्वत्प्रत्यक्षत्वं विवक्षित्वा योगिभिरित्युक्तम्। चतुर्थपादव्यावर्त्यामाशङ्कामाह—नन्विति। निरुद्धस्यापि मनसः प्रचार इति संबन्धः। विशेषप्रत्ययाभावस्य निरोधे स्वापे च विशेषाभावादिति हेत्वर्थः। तत्र प्रचारे प्रसिद्धे सतीति यावत्। चतुर्थपादमुत्तरत्वेनावतारयति—अत्रेति। निरुद्धस्य मनसः सुषुप्तस्येव प्रचारस्य सुज्ञानत्वान्न तत्र ज्ञातव्यमस्तीत्युक्तं प्रत्याह—नैवमिति। विद्याभावव्यावृत्त्यर्थं मोहविशेषणं चित्तभ्रमं व्यावर्तयितुं तमोविशेषणम्। अन्तर्लीना गुप्ता अनेकानर्थफलानां प्रवृत्तीनां बीजभूता वासना यस्मिन्मनसि तस्येति सुषुप्तस्य विशेषणम्। आत्मनः सत्यस्यानुबोधो यो व्याख्यातः स एव हुताशोऽग्निस्तेन विप्लुष्टान्यविद्यादीन्यनेकानर्थपर्यन्तप्रवृत्तीनां बीजानि यस्य तस्येति निरुद्धस्य विशेषणं, प्रकर्षेण शान्तं सर्वक्लेशात्मकं रजो यस्येति तस्यैव विशेषणान्तरम्। स्वतन्त्रो ब्रह्मस्वरूपावस्थानात्मक इत्यर्थः। यथोक्तस्य प्रचारस्य सुषुप्तप्रचारविसदृशस्य दुर्ज्ञानत्वे स्थिते फलितमाह—तस्मादिति॥ ३४॥

लीयते हि सुषुप्ते तन्निगृहीतं न लीयते।
तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः॥ ३५॥

प्रचारभेदे हेतुमाह। लीयते सुषुप्तौ हि यस्मात्सर्वाभिरविद्यादिप्र-

---

१ छ. °द्यानर्थ°। २ घ. °तन्त्रप्र°। ३ ज. °तहानफलमस्य। ४ घ. ङ. ज. °द्धं भ°। ५ ग. छ. झ. च भ°। ६ ग. °स्य विरो°। ७ ख. ° रेति प्र°। ८ घ. प्रतिषिद्धे। ९ ग. झ. °त्वात्तत्र किं ज्ञा°। १० ग. °सा भवतीति अ°। ११ झ. °न प्लु°। १२ ग. ज. °कार्थ°। १३ ख. °षुप्तिप्र°। १४ छ. सुसुप्तौ। १५ क. छ. झ. °ते हि। १६ च. सुषुप्ते।

त्ययबीजवासनाभिः सह तमोरूपमविशेषरूपं बीजभावमापद्यते तद्वि-वेकविज्ञानपूर्वकं निरुद्धं[1] निगृहीतं सन्न लीयते तमोबीजभावं नाऽऽपद्यते[2] तस्माद्युक्तः प्रचारभेदः सुषुप्तस्य समाहितस्य[3] मनसः। यदा ग्राह्यग्राहकाविद्याकृतमलद्वयवर्जितं तदा परमद्वयं ब्रह्मैव तत्संवृत्तमित्यतस्तदेव[4] निर्भयम्। द्वैतग्रहणस्य भयनिमित्तस्याभावात्। शान्तमभयं ब्रह्म। यद्विद्वान्न बिभेति कुतश्चन। तदेव विशेष्यते[5] ज्ञप्तिर्ज्ञानमात्मस्वभावचैतन्यं तदेव ज्ञानमालोकः प्रकाशो यस्य तद्ब्रह्म ज्ञानालोकं विज्ञानैकरसघनमित्यर्थः। समन्ततः समन्तात्सर्वतो व्योमवन्नैरन्तर्येण व्यापकमित्यर्थः॥ ३५॥

मनसः सुषुप्तस्य समाहितस्य[6] च प्रचारभेदोऽस्तीत्युक्तं तत्र हेतुमाह—**लीयते हीति**। समाहितस्य मनसो द्वैतवर्जितस्य स्वरूपं कथयति—**तदेवेति**। पूर्वार्धस्य तात्पर्यमाह—**प्रचारेति**। मनसः सुषुप्तस्य समाहितस्य चेति[7] वक्तव्यम्। यस्मादित्यस्य तस्मादित्युत्तरेण संबन्धः। अविद्यादीत्यादिशब्देनास्मितारागादयो गृह्यन्ते। सुषुप्ते[8] मनसो वासनाभिः सह लयप्रकारं कथयति—**तमोरूपमिति**। आपद्यत इति संबन्धः। जाड्यं रूपमवस्थान्तरेऽपि तुल्यमित्यतो विशिनष्टि—**अविशेषेत्यादिना**[9]। एवमाद्यं पादं व्याख्याय द्वितीयं पादं व्याचष्टे—**तदिति**। पूर्वविभागविभजनेन फलितमाह—**तस्मादिति**। तदेव निर्भयं ब्रह्मेत्यस्यार्थमाह—**यदेति**। समाहितं मनो-ग्राह्यं[10] ग्राहकमित्यविद्याकृतं[11] यन्मलद्वयं तेन वर्जितं यदा तदेति संबन्धः। मनसो ब्रह्मत्वे[12] निर्भयत्वं तस्य फलितमित्याह[13]—**इत्यत इति**। तत्र हेतुमतःशब्देन सूचितमाह—**द्वैतेति**। यदुपशान्तं ब्रह्माभयमित्युक्तं तस्याभयत्वे[14] प्रमाणं[15] सूचयति—**यद्विद्वानिति**। ननु यथोक्तं ब्रह्म प्रकाशते[16] न वा[17] प्रकाशते। प्रकाशते चेदुपायापेक्षायामद्वैतव्याघातः। न चेत्प्रकाशते पुरुषार्थत्वासिद्धिरिति तत्राऽऽह—**तदेवेति**। तस्य ब्रह्मत्वसिद्धये परिच्छिन्नत्वं व्यवच्छिनत्ति—**समन्तत इति**॥ ३५॥

**अजमनिद्रमस्वप्नमनामकमरूपकम्।**
**सकृद्विभातं सर्वज्ञं नोपचारः कथंचन॥ ३६॥**

जन्मनिमित्ताभावात्सबाह्याभ्यन्तरमजम्। अविद्यानिमित्तं हि जन्म

१ ख. °द्धं गृ°। २ च. नोपपद्यते। ३ ख. च. छ. झ. °स्य च म°। ४ च. °त्संप्रवृ°। ५ छ. विशिष्यते। ६ ग. झ. °स्य प्र°। ७ ग. झ. °ति च व°। ८ ग. °षुप्तम°। ९ ग. झ. °षेणेत्या°। १० क. °ग्राह°। ११ ग. झ. °कमवि°। १२ ग. झ °त्वेऽपि नि°। १३ क. घ. ङ. छ. ज. ञ. ट. °तमाह। १४ झ. °त्वेन प्र°। १५ ख. °माणान्तरं सू°। १६ ग. °काशेत चे°। १७ झ. वा चे°।

रज्जुसर्पवदित्यवोचाम । सा चाविद्याऽऽत्मसत्यानुबोधेन निरुद्धा । यतोऽजमत[1] एवानिद्रम् । अविद्यालक्षणाऽनादिर्माया[2] निद्रा । स्वापात्प्रबुद्धोऽद्वयस्वरूपेणाऽऽत्मनाऽतोऽस्वप्नम् । अप्रबोधकृते ह्यस्य[3] नामरूपे प्रबोधाच्च ते रज्जुसर्पवद्विनष्टे[4] इति न नाम्नाऽभिधीयते ब्रह्म रूप्यते वा न केनचित्प्रकारेणेत्यनामकमरूपकं च तत्। "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः । किं च सकृद्विभातं सदैव विभातं सदा भारूपमग्रहणान्यथाग्रहणाविर्भावतिरोभाववर्जितत्वात् । ग्रहणाग्रहणे हि रात्र्यहनी तमश्चाविद्यालक्षणं सदाऽप्रभातत्वे कारणं तदभावान्नित्यचैतन्यभारूपत्वाच्च युक्तं सकृद्विभातमिति । अत एव सर्वं च तज्ज्ञस्वरूपं चेति सर्वज्ञम् । नेह ब्रह्मण्येवंविध उपचरणमुपचारः कर्तव्यः । यथाऽन्येषामात्मस्वरूपव्यतिरेकेण समाधानाद्युपचारः । नित्यशुद्धबुद्धमुक्तस्वभावत्वाद्ब्रह्मणः कथंचन न कथंचिदपि कर्तव्यसंभवोऽविद्यानाश इत्यर्थः ॥ ३६ ॥

प्रकृतमेव ब्रह्म प्रकारान्तरेण[13] निरूपयति—अजमित्यादिना । न च तस्मिन्निरुपाधिके ब्रह्मणि ज्ञाते[14] कर्तव्यशेषः संभवतीत्याह—नेति । अजत्वमुपपादयति—जन्मेति । किं तज्जन्मनिमित्तं यदभावादजत्वमुपपाद्यते तदाह—अविद्येति । कुतस्तर्हि तन्निवृत्त्याऽजत्वसिद्धिस्तत्राऽऽह—सा चेति । निमित्तनिवृत्त्याऽजत्वसिद्धेर्युक्तमनिद्रत्वं निद्राशब्देनाविद्याभिलापादित्याह—अत एवेति । विशेषणान्तरं साधयति—अविद्यालक्षणेति । उत्तरविशेषणद्वयं विवृणोति—अप्रबोधेति । ब्रह्मणो नामरूपवत्त्वाभावे प्रमाणमाह—यत इति । विशेषणान्तरमाह—किं चेति । सदाभारूपत्वे हेतुमाह—अग्रहणेति । जीवे ह्युपाधिस्थेऽहंरूपग्रहणानुदये तिरोभावः कर्ताऽहमित्यन्यथाग्रहणोदये चाऽऽविर्भावो भवति तदभावाद्भास्वरूपमेव सदा ब्रह्मेत्यर्थः। श्रुत्याचार्योपदेशात्पूर्वं ब्रह्मण्यग्रहणं तदुपदेशादूर्ध्वं तद्ग्रहणमिति प्रसिद्धे ब्रह्मण्यपि ग्रहणाग्रहणे स्यातामित्याशङ्क्याऽऽह—ग्रहणेति । यथा सवित्रपेक्षया रात्र्यहनी न स्तः किं तूदयास्तमयकल्पनया कल्प्येते तथा ब्रह्मस्वभावालोचनया ग्रहणाग्रहणे न

१ ख. घ. ङ. ज. °तोऽतोऽजम° । च. °तोऽतोऽयमजम° । २ क. °दिमाया । ३ क. स्वस्य । ४ क. °ष्टे न । ५ च. °भानत्वे । ६ च. °न्यप्रभा° । ७ ख. °म् । न हि ब्र° । ८ घ. °विधे य उ° । ९ च. °रः कर्तव्यः । नि° । १० क. °भावाद्र° । ११ च. ज. °न क° । १२ ज. °वो विद्यमाने ना° । १३ ज. °कारे° । १४ छ. °ते सति क° । १५ ज. °त्या तत्त्वसि° । १६ घ. °लाषादि° । १७ ग. झ. °षणं वि° । १८ क. °भासरू । १९ ग. झ. °हंग्र° । २० ग. झ. °द्भातमे° । छ. °द्भावरू° । २१ ग. झ. °सिद्धेर्ब्रह्म° । घ. °सिद्धं ब्र° । २२ ज. °पेक्षाया ।

विद्येते किं तूपाधिद्वारा कल्प्येते । तेन ब्रह्मणः सदा भारूपत्वमविरुद्धमित्यर्थः । इतश्च निरुपाधिकं ब्रह्म सदा[1]विभातमेषितव्यमित्याह—**तमश्चेति** । [2]अप्रभातत्व इति च्छेदः । तदभावो ब्रह्मदृष्ट्या तमःसंबन्धाभावः । उक्तमेव [3]हेतूकृत्य विशेषणान्तरं विशदयति—**अत एवेति** । विदुषो निरु[4]द्धमनसो ब्रह्मस्वरूपावस्थानमुक्तम् । ये तु विदुषोऽपि समाध्यादि कर्तव्यमाचक्षते तान्प्रत्या[5]ह—**नेहेति** । एवंविध[6]त्वं निरुपाधिकत्वमुपचारः समा[7]ध्यादिः । निरुपाधिके ब्रह्मणि विदुषो न कर्तव्यशेषोऽस्तीत्येतमर्थं वैधर्म्योदाहरणेन साधयति—**यथेत्यादिना** । अन्येषामनात्मविदामिति यावत् । अविद्यादशायामेव सर्वो व्यवहारो विद्यादशायां चाविद्याया असत्त्वान्न कोऽपि व्यवहारः । बाधितानुवृत्त्या तु व्यवहाराभाससिद्धिरित्यर्थः ॥ ३६ ॥

**सर्वाभिलापविगतः सर्वचिन्तासमुत्थितः ।**
**सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥३७॥**

अनामकत्वाद्युक्तार्थसिद्धये हेतुमाह—अभिलप्यतेऽनेनेत्यभिलापो वाक्करणं सर्वप्रकारस्याभिधानस्य तस्माद्विगतः । वागत्रोपलक्षणार्था सर्वबाह्यकरणवर्जित इत्येतत् । तथा सर्वचिन्तासमुत्थितः । चिन्त्यतेऽनयेति चिन्ता बुद्धिस्तस्याः समुत्थितोऽन्तःकरणवर्जित इत्यर्थः । "[8]अ[9]प्राणो ह्यमनाः शुभ्रः" इति श्रुतेः । "अक्षरात्परतः परः" । यस्मात्सर्व[10]विशेषवर्जितोऽतः सुप्रशान्तः । सकृज्ज्योतिः सदैव ज्योतिरात्मचैतन्यस्वरूपेण, सम[11]धिः समाधिनिमित्तप्रज्ञावगम्यत्वात् । समाधीयतेऽस्मिन्निति वा समाधिः । अचलो[12]ऽविक्रियः । अत एवाभयो विक्रियाभावात् ॥ ३७ ॥

विद्वानेव ब्रह्मेत्यङ्गी[13]कृत्य प्रकृतं ब्रह्म पुंलिङ्गत्वेन निर्दिशति—**सर्वेति** । श्लोक[14]स्य तात्पर्यमाह—**अनामेति** । अत्रेति प्रकृतपदोपा[15]दाने तर्हि सर्व[16]करणवर्जितत्वस्यात्रैव सिद्धत्वादुत्तरविशेषणमनर्थकमित्याशङ्क्याऽऽह—**सर्वबाह्येति** । बाह्यकरणसंबन्धराहित्यवदन्तःकरणसंबन्धराहित्यं दर्शयति—**तथेति** । उभयविधकरणसंबन्धवैधुर्येणाऽऽत्मनः शुद्धत्वे प्रमाणमाह—**अप्राण इति** । कारणसंबन्धराहित्यमाह—**अक्षरादिति** । तस्य परत्वं कार्यापेक्षया द्रष्टव्यम् । उक्तं हेतूकृत्य विशेषणा[17]न्तरं विशद-

---

१ ग. झ. °दाभा° । २ झ. अभा° । ३ छ. हेतुं कृ° । ४ ग. छ. झ. °द्धस्य म° । ५ ख. °ह—नहीति । ६ क. °धत्वनि° । ७ छ. °ध्यादि । नि° । ८ क. अप्रमाणो । ९ च. °णो ह्यशुद्ध इ° । १० क. विषयव° । ११ ख. °माधिनि° । १२ ख. °लोऽक्रि° । १३ ख. °कृतं । १४ ग. झ. °कतात्पर्यार्थमा° । १५ ख. घ. ङ. ज. °दानं त° । १६ ग. °वैबाह्यक° । १७ छ. °रं दर्शय° ।

यति—यस्मादिति । अस्मिन्परस्मिन्नात्मनि समाधीयते निक्षिप्यते जीवस्तदुपाधिश्चेति समाधिः परमात्मा । समाधिनिमित्तया[2] प्रज्ञया तस्यावगम्यत्वाद्वा समाधित्वमवगन्तव्यम् । अत एवेत्युक्तं स्फुटयति—विक्रियेति ॥ ३७ ॥

**ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते ।**
**आत्मसंस्थं तदा ज्ञानमजाति समतां गतम् ॥ ३८ ॥**

यस्माद्ब्रह्मैव समाधिरचलोऽभय इत्युक्तमतो न तत्र तस्मिन्ब्रह्मणि ग्रहो ग्रहणमुपादानं, नोत्सर्ग उत्सर्जनं हानं वा विद्यते । यत्र हि[3] विक्रिया[4] तद्विषयत्वं[5] वा तत्र हानोपादाने स्यातां न तद्द्वयमिह ब्रह्मणि संभवति । विकारहेतोरन्यस्याभावान्निरवयवत्वाच्च । अतो न तत्र हानोपादाने[6] इत्यर्थः । चिन्ता यत्र न विद्यते[7] । सर्वप्रकारैव चिन्ता[8] न संभवति[9] यत्रामनस्त्वात्[10]कुतस्तत्र हानोपादाने[11,12] इत्यर्थः । यदैवाऽऽत्मसत्यानुबोधो जातस्तदैवाऽऽत्मसंस्थं विषयाभावादग्न्युष्णवदात्मन्येव स्थितं ज्ञानम् । अजाति जातिवर्जितम् । समतां गतं [13]परं साम्यमापन्नं भवति । यदादौ प्रतिज्ञातमतो वक्ष्याम्यकार्पण्यमजाति समगतां गतमितीदं तदुपपत्तितः शास्त्रतश्चोक्तमुपसंह्रियते[14] । अजाति समतां[15] गतमित्येतस्मादात्मसत्यानुबोधात्कार्पण्यविषयमन्यत् । "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः । प्राप्यैतत्सर्वः[16] कृतकृत्यो ब्राह्मणो भवतीत्यभिप्रायः[17] ॥ ३८ ॥

प्रकृते ब्रह्मण्यविक्रिये विधिनिषेधाधीनयोर्वैदिकयोर्वा लौकिकयोर्वा हानोपादानयोरनवकाशत्वमित्याह—ग्रहो नेति । मनोविषयत्वाभावाच्च ब्रह्मणि तयोरवकाशो नास्तीत्याह—चिन्तेति । यथोक्ते ब्रह्मणि ज्ञाते फलितमाह—आत्मेति । प्रकरणादौ प्रतिज्ञातमुपसंहरति—अजातीति । किमिति लौकिकौ वैदिकौ वा ग्रहोत्सर्गौ ब्रह्मणि न भवतस्तत्राऽऽह—यस्मादिति । उक्तमेवार्थमुपपादयति—यत्र हीति । ब्रह्मणि विक्रियाभावे हेतुमाह—विकारेति । तस्य विक्रियाविषयत्वाभावे[18]ऽपि हेतुं[19] कथयति—निरवयवत्वाच्चेति । विक्रियायास्तद्विषयत्वस्य चाभावे फलितमाह—

---

१ घ. °त्तप्र° । २ ख. ग. छ. झ. °क्तं हेतुं स्फु° । ३ ज. हि कि° । ४ च. झ. °या विष° । ५ झ. °त्वं त° । ६ झ. °ने संभवतः । चि° । ७ च. °ते, इति स° । ८ च. °न्ता यत्र न । ९ क. °ति । य° । १० क. °नस्त्वं कुत° । ११ च. °दानचिन्तादय इ° । १२ छ. °ने स्यातामित्य° । १३ ज. परसा° । १४ ज. शास्त्रोक्त° । १५ झ. °मतामि° । १६ च. झ. °त्सर्वे कृ° । १७ घ. °त्यर्थः ॥ ३८ ॥ १८ झ. °षयाभा° । १९ क. °वे हे° ।

अत इति । द्वितीयं पादमवतार्य व्याचष्टे—चिन्तेत्यादिना । तृतीयं पादं विभजते—यदैवेति । चतुर्थपादं व्याकरोति—अजातीति । नन्विदं प्रकरणादावुक्तं किमर्थं पुनरिहोच्यते तत्राऽऽह—यदादाविति । ननु ग्रहो न तत्रेत्यादौ पूर्वत्र तत्त्वज्ञानमुक्तं न त्वकार्पण्यं तत्कथमकार्पण्यं वक्ष्यामीत्युपक्रान्तस्यात्रोपसंहारः संभवतीत्याशङ्क्य तत्त्वज्ञानस्यैवाकार्पण्यरूपत्वादुक्तोपसंहारसिद्धिरित्याह—तस्मादिति । तत्त्वज्ञानातिरिक्तं ज्ञानं कार्पण्यविषयमित्यत्र लिङ्गं दर्शयति—यो वा इति । तत्त्वज्ञानराहित्ये कृपणत्वमुक्त्वा तद्वत्त्वे फलितमाह—प्राप्येति ॥ ३८ ॥

अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः ।
योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ ३९ ॥

यद्यपीदमित्थं परमार्थतत्त्वम्[2] । अस्पर्शयोगो नामायं सर्वसंबन्धाख्यस्पर्शवर्जितत्वादस्पर्शयोगो नाम वै स्मर्यते[3] प्रसिद्धमुपनिषत्सु । दुःखेन दृश्यत इति दुर्दर्शः सर्वैर्योगिभिः, वेदान्तविहितविज्ञानरहितैः सर्वयोगिभिरात्मसत्यानुबोधायासलभ्य एवेत्यर्थः । योगिनो बिभ्यति ह्यस्मात्सर्व[4]भयवर्जितादप्यात्मनाशरूपमिमं योगं मन्यमाना भयं कुर्वन्ति अभयेऽस्मिन्भयदर्शिनो भयनिमित्तात्मनाशदर्शनशीला अविवेकिन इत्यर्थः ॥ ३९ ॥

परमार्थब्रह्मस्वरूपावस्थानफलकं चेदद्वैतदर्शनं किमिति[6] तर्हि सर्वैरेव नाऽऽद्रियते तत्राऽऽह—अस्पर्शेति । परमार्थतत्त्वं कर्मनिष्ठानां बहिर्मुखानां(णां) दुर्दर्शनमित्यत्र हेतुमाह—योगिन इति । यदुक्तं तत्त्वज्ञानं स्वरूपावस्थानफलकमिति तदङ्गी करोति—यद्यपीति । परमार्थतत्त्वं ब्रह्मेदं प्रत्यग्भूतम् । इत्थं प्रागुक्तपरिपाट्या कूटस्थसच्चिदानन्दात्मकं यद्यपि तत्त्वज्ञानात्प्राप्यते तथाऽपि मूढास्तन्निष्ठा न भवन्तीति शेषः । यस्य तत्त्वानुभवस्य स्वरूपावस्थानं फलमुक्तं तमिदानीं विशिनष्टि—अस्पर्शेति । तत्र वर्णाश्रमादिधर्मेण पापादिमलेन च स्पर्शो[10][11] न भवत्यस्मादित्यद्वैतानुभवोऽस्पर्शः[12] । स एष[13] योगो जीवस्य ब्रह्मभावेन योजनादित्याह—सर्वेति । नामेतिनिपातस्य पर्यायं गृहीत्वा विवक्षितमर्थमाह—नामेत्यादिना । उपनिषत्सु न लिप्यते कर्मणा पापकेनेत्याद्यासु । दुःखं श्रवणमननादिलक्षणम् । योगिशब्दस्य ज्ञानिविषयत्वं व्याव-

---

१ ग. छ. झ. °त्वाद्युक्तो° । २ च. °तत्त्वं तथाऽपि तस्मिन्केचिन्मुह्यन्तीत्याह । अ° । ३ क. °विज्ञा° । ४ ख. °र्थमलव° । ५ ज. °नाऽभ° । ६ ग. झ. °ति स° । ७ झ. °त्मत्वं य° । ८ क. °ढास्तुष्टास्त° । ९ छ. ज. °स्थानफ° । १० घ. ज. °न स्प° । ११ च. संस्पर्शो । १२ छ. °नुभावोऽ° । १३ ग. झ. एव यो° ।

र्शयति—वेदान्तेति । कैस्तर्हि यथोक्तस्यानुभवस्य लभ्यत्वमित्याशङ्क्याऽऽह—आत्मेति । उत्तरार्धं विभजते—योगिन इति । कर्मिणो हि श्रोत्रिया ब्राह्मण्याद्यस्माकं न[1]ङ्क्ष्यतीति मत्वा तत्त्वज्ञानाद्बिभ्यतीत्यर्थः । अभयनिमित्तमेव तत्त्वज्ञानं मिथ्याज्ञानवशाद्भयनिमित्तं पश्यन्तीत्याह—सर्वेति । भयदर्शित्वं विशदयति—अभयेति ॥ ३९ ॥

मनसो निग्रहायत्तमभयं सर्वयोगिना(णा)म् ।
दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च[2] ॥ ४० ॥

येषां पुनर्ब्रह्मस्व[3]रूपव्यतिरेकेण रज्जुसर्पवत्कल्पितमेवं[4] मन इन्द्रियादि च न परमार्थतो विद्यते तेषां ब्रह्मस्वरूपाणामभयं मोक्षाख्या चाक्ष[5]या शान्तिः स्वभावत एव सिद्धा नान्यायत्ता नोपचारः कथंचनेत्यवोचाम । ये त्वतोऽन्ये योगिनो मार्गगा हीनमध्यमदृष्टयो मनोऽन्यदात्मव्यतिरिक्तमात्मसं[6]बन्धि पश्यन्ति[7] तेषामात्मसत्यानुबोधरहितानां [8]मनसो निग्रहायत्तमभयं सर्वेषां योगिनाम् । किं च दुःखक्षयोऽपि । न ह्यात्मसंबन्धिनि मनसि प्रचलिते दुःखक्षयोऽस्त्यविवेकिनाम् । किं चाऽऽ[9]त्मप्रबोधोऽपि मनोनिग्रहायत्त एव । तथाऽक्षयाऽपि मोक्षाख्या शान्तिस्तेषां [10]मनोनिग्रहाय[11]त्तैव ॥ ४० ॥

उत्तमदृष्टीनामद्वैतद[12]र्शनमद्वैतदृष्टिफलं[13] च मनोनिरोधमुक्त्वा मन्ददृष्टीनां मनोनिरोधाधीनमात्मदर्शनमुपन्यस्यति—मनस इति । अभयमित्यशेषभयनिवृत्तिसा[14]धनमात्मदर्शनमुच्यते । सर्वयोगिना(णां) सर्वेषां योगिनां[15] कर्मानुष्ठाननिष्ठानां बुद्धि[16]शुद्धिमतामित्यर्थः । [17]मनोनिरोधाधीनं प्रागुक्तमनूद्य तत्फलं कैवल्यं कथयति—दुःखेति । श्लोकस्य विषयं प[18]रिशिनष्टि—येषामिति । अभयं भयराहित्यमसंत्रासात्मकमित्यर्थः । उक्तलक्षणा शा[19]न्तिर्निरतिशयानन्दाभिव्यक्तिः स्वभावतो विद्यास्वरूपसामर्थ्यादित्यर्थः । विदुषां जीवन्मुक्तानां मुक्तेः सिद्धत्वान्न साधनापेक्षेत्याह—नान्यायत्तेति । तत्र वाक्योपक्रममनुकूलयति—नेत्यादिना । उत्तमेभ्यो ज्ञानवद्भ्योऽधिकारिभ्यो व्यतिरिक्तानधिका[20]रिणोऽवतारयति—ये त्विति । योगिनः सुकृतानुष्ठायिनस्तदनुष्ठानादेव सन्मार्ग-

---

१ ग. न क्षरती°। २ च. वा । ३ ज. °रूपेण व्य° । ४ झ. °व सर्वं म° । ५ झ. °क्षय्या शा° । ६ च. °बन्धं प° । ७ च. °न्ति तेषां मोक्षफलमाह मनस इति ते° । ८ ख. मनोनि° । ९ च. °त्मबो° । १० झ. मनसो नि° । ११ च. °यतमेव । १२ °तद्दृष्टिफलं म° । १३ झ. °लं म° । १४ क. °धनात्म° । १५ घ. °नां क° । १६ ज. °द्धिम° । १७ ग. °नोरो° । १८ घ. °रिविशि° । १९ ग. घ. °न्तिरनति° । २० क. °कारेणाव° ।

गामिनस्तेषामपि तत्त्वज्ञानं कथंचिदुपजातं चेदलं मनोनिग्रहेणेत्याशङ्क्याऽऽह—**तेषामिति**। अभयं तदेव तत्त्वज्ञानम्। दुःखनिवृत्तिरपि मनोनिग्रहमपेक्ष्य भवतीत्याह—**किं चेति**। तदेव व्यतिरेकमुखेन(ण) स्फोरयति—**न हीति**। इतश्च मनो निगृ(ग्र)हीतव्यमित्याह—**किं चेति**। अभयमित्यत्र सूचितं स्पष्टं विवृणोति—**आत्मेति**। इतश्च मनोनिग्रहोऽर्थवानित्याह—**तथेति**। तेषां साधकानां मुमुक्षूणामिति यावत् ॥ ४० ॥

**उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना ।**
**मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ ४१ ॥**

**मनोनिग्रहोऽपि[2] तेषामुदधेः[3] कुशाग्रेणैकबिन्दुनोत्सेचनेन[4] शोषणव्यवसायवद्व्यवसायवतामनवसन्नान्तःकरणानामनिर्वेदादपरिखेदतो[5] [6] भवतीत्यर्थः ॥ ४१ ॥**

कथं मुमुक्षूणां जिज्ञासूनां मनोनिग्रहः सिध्येदित्याशङ्क्याऽऽह—**उत्सेक इति**। दृष्टान्तदार्ष्टान्तिकभूतश्लोकनिविष्टाक्षराणि व्याचष्टे—**मनोनिग्रहोऽपीति**[7]। तेषां व्यवसायवतामुद्योगभागिनामनुद्वेगवतामिति संबन्धः। चक्षुषो निमीलने तमो दृश्यते तस्य चोन्मीलने घटाद्येवोपलभ्यते न कदाचिदपि ब्रह्मेत्युद्वेगपरिवर्जनात्प्रागुदीरितानां मनोनिग्रहः संभवति तदाह—**अपरिखेदत इति** ॥ ४१ ॥

**उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ।**
**सुप्रसन्नं ॡये चैव यथा कामो लयस्तथा ॥ ४२ ॥**

**किमपरिखिन्नव्यवसायमात्रमेव मनोनिग्रह उपायो[8] नेत्युच्यते। अपरिखिन्नव्यवसायवान्[9]सन्वक्ष्यमाणेनोपायेन[10] कामभोगविषयेषु[11] विक्षिप्तं मनो निगृह्णीयान्निरुन्ध्यादात्मन्येवेत्यर्थः । किं च लीयतेऽस्मिन्निति[12] सुषुप्तो लयस्तस्मिँल्लये च सुप्रसन्नमायासवर्जितमपीत्येतन्निगृह्णीयादित्यनुवर्तते[13]। सुप्रसन्नं चेत्कस्मान्निगृह्यत इति । उच्यते। यस्माद्यथा कामोऽनर्थहेतुस्तथा लयोऽपि। अतः कामविषयस्य मनसो निग्रहवल्लयादपि निरोद्धव्यमित्यर्थः ॥ ४२ ॥**

समाधिं कुर्वतस्तत्त्वसाक्षात्कारप्रतिबन्धका[14] लयविक्षेप[15]सुखरागास्तेभ्यो मनसो वक्ष्य-

---

१ झ. °ति। तदेवाभ°। २ च. मनसो निग्रहे तेषामुपायमाह—उत्सेक इति। मनो°। ३ ख. ग. °दधेर्यद्वत्कुशा°। ४ च. °ने शो°। ५ च. °यवुद्व्यवता°। ६ च. °वशान्तः°। ७ झ. मनसो नि°। ८ ज. °पाये ने°। ९ च. ज. झ. °वान्व°। १० च. °माणोपा°। ११ च. °ये वि°। १२ झ. °ते यस्मि°। १३ च. झ. °तमित्ये°। १४ छ. °न्धकल°। १५ ग. घ. ङ. ज. °पकषायसु°।

माणोपायेन निग्रहं कुर्यात्। अन्यथा समाधिसा[1]फल्यानुपपत्तेरित्याह—**उपायेनेति**। प्रागुक्तादुपायादेव मनोनिग्रहपरिग्रहे श्रवणादिविध्यानर्थक्यमिति मन्वानः शङ्कते—**किमिति**। पूर्वोक्तोपायवतः श्रवणाद्यनु[2]तिष्ठतो मनोनिग्रहद्वारा तत्त्वज्ञानसिद्धिरित्युत्तरमाह—**नेत्युच्यत इति**। तृतीयपादं व्याचष्टे—**किं चेति**। लीयते स्थानद्वयमिति शेषः। चतुर्थपादमाकाङ्क्षाद्वारा विवृणोति—**सुप्रसन्नमित्यादिना**॥ ४२॥

**दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत्।**
**अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति॥ ४३॥**

कः स उपाय इति। उच्यते। सर्वं द्वैत[3]मविद्याविजृम्भितं दुःखमेवेत्यनुस्मृत्य कामभोगात्कामनिमित्तो भोग इच्छाविषयस्तस्माद्विप्रसृतं मनो निवर्तयेद्वैराग्यभा[4]वे[5]नयेत्यर्थः। अ[6]जं ब्रह्म सर्वमित्येतच्छास्त्राचार्योपदेशतोऽनुस्मृत्य तद्विपरीतं द्वैतजातं नैव तु पश्यति। अभावात्॥ ४३॥

उपायेन निगृह्णीयादित्युक्तम्। तमेवोपायं वैराग्य[7]रूपमुपदिशति—**दुःखमिति**। ज्ञानाभ्यासाख्यमुपायान्तरमुपन्यस्यति—**अजमिति**। अक्षरव्याख्यानार्थमाकाङ्क्षां निक्षिपति—**कः स इति**। तत्र पूर्वार्धं व्याकरोति—**उच्यत इत्यादिना**। वैराग्यभावना तत्र तत्र द्वैतविषये दोषानुसंधानेन[9] वैतृष्ण्यभावना। तया का[8]मभोगान्मनो निरोद्धव्यमित्यर्थः। द्वितीयार्धं ज्ञानाभ्यासविषयं व्याकरोति—**अजमित्यादिना**॥ ४३॥

**लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः।**
**सकषायं विजानीयात्समप्राप्तं न[11] चालयेत्॥ ४४॥**

एवमनेन ज्ञानाभ्यासवै[10]राग्यद्वयोपा[12]येन लये सुषुप्ते लीनं संबोधयेन्मनः। आत्म[13]विवेकदर्शनेन योजयेत्। चित्तं मन इत्यनर्थान्तरम्। विक्षिप्तं च कामभोगेषु शमयेत्पुनः। एवं पुनः पुनरभ्य[14]स्यतो लयात्संबोधितं विषयेभ्यश्च व्यावर्तितं नापि सा[15]म्यापन्नमन्तरालावस्थं सकषायं सरा[16]गं बीजसंयुक्तं मन इति विजानीयात्। ततोऽपि यत्नतः

---

१ ग. ज. साकल्या°। २ क. झ. °नुष्ठितो। ३ च. °तजातम°। ४ ख. °भावंनयेत्य°। घ. ज. °भावं नयेत्य°। ५ झ. °वमानयेदित्य°। ६ झ. अजमि°। ७ झ. °ग्यमु°। ८ ग. °ने च वै°। ९ छ. झ. °म च वै°। १० घ. ङ. ज. °मसङ्गान्म°। ११ च. न विचा°। १२ घ. °पासनेन। १३ घ. ज. °त्मद्° १४ घ. ङ. ञ. °भ्यसतो। १५ ज. °साम्यमाप°। १६ छ. °रागबी°।

साम्यमप्रापादयेत् । यदा तु समप्राप्तं भवति समप्राप्त्यभिमुखी भवतीत्यर्थः । ततस्तन्न विचालयेद्विषयाभिमुखं न कुर्यादित्यर्थः ॥ ४४ ॥

ज्ञानाभ्यासवैराग्याभ्यां लयाद्विक्षेपाच्च व्यावर्तितं[1] मनो रागप्रतिबद्धं श्रवणमनननिदिध्यासनाभ्यासप्रसूतसंप्रज्ञातसमाधिना[2]ऽसंप्रज्ञातसमाधिपर्यन्तेन ततोऽपि प्रतिबन्धाद्व्यावर्तनीयमित्याह—**लय इति** । श्लोकाक्षराणि व्याकरोति[3]—**एवमित्यादिना** । ज्ञानाभ्यासः श्रवणाद्यावृत्तिर्विषयेषु क्षयिष्णुत्वादिदोषदर्शनेन[4] वैतृष्ण्यं वैराग्यं लयो निद्रा । संप्रबोधनमेवाभिनयति—**आत्मेति** । मनसि प्रकृते किमिति चित्तमुच्यते तत्राऽऽह—**चित्तमिति** । विक्षिप्तं[5] विप्रसृतं शमयेद्व्यावर्तयेदिति यावत् । पुनरित्यत्र विवक्षितमर्थमाह—**एवमिति** । उभयतो व्यावर्तितं मनस्तर्हि निर्विशेषब्रह्म[6]रूपतां गत[7]मित्याशङ्क्याऽऽह—**नापीति** । अन्तरालावस्थमनसः स्वरूपं तृतीयपादावष्टम्भेन स्पष्टयति—**सकषायमिति** । रागस्य बीजत्वं पराचीनविषयप्रवृत्तिं प्रति प्रतिपत्तव्यम् । यथोक्तं मनो ज्ञात्वा किं कर्तव्यमित्यपेक्षायामाह—**ततोऽपीति** । अन्तरालावस्था पञ्चम्या परामृश्यते । लयावस्थादि दृष्टान्तयितुमपिशब्दः । यत्नतः संप्रज्ञातसमाधेरिति यावत् । साम्यमसंप्रज्ञातसमाधिमित्यर्थः । चतुर्थपादस्यार्थमाह—**यदा त्विति** । समाधिद्वयद्वारेण समं निर्विशेषं परिपूर्णं ब्रह्मरूपं प्राप्य मनस्तन्मात्रतया समाप्तं चेदप्राप्तप्रतिषेधः स्यादित्याशङ्क्याऽऽह—**समप्राप्तीति** । ततो निर्विशेषवस्तुप्राप्त्याभिमुख्यादनन्तरमित्यर्थः । किं तन्मनसश्चालनं यत्प्रतिषिध्यते तत्राऽऽह—**विषयेति** ॥ ४४ ॥

**नाऽऽस्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत् ।**
**निश्चलं निश्चरच्चित्तमेकी कुर्यात्प्रयत्नतः ॥ ४५ ॥**

समाधित्सतो योगिनो यत्सुखं जायते तन्नाऽऽस्वादयेत् । तत्र न रज्येतेत्यर्थः । कथं तर्हि[10] । निःसङ्गो निस्पृहः प्रज्ञया विवेकबुद्ध्या यदुपलभ्यते सुखं तदविद्यापरिकल्पितं मृषैवेति विभावयेत् । ततोऽपि सुखरागान्निगृह्णीयादित्यर्थः । यदा पुनः सुखरागान्निवृत्तं निश्चलस्वभावं सन्निश्चरद्बहिर्निर्गच्छद्भवति चित्तं ततस्ततो नियम्योक्तोपायेनाऽऽत्मन्येवैकी कुर्यात्प्रयत्नतः । चित्स्वरूपसत्तामात्रमेवाऽऽपादयेदित्यर्थः ॥ ४५ ॥

---

१ झ. °र्तितम° । २ क. °माधिप° । ३ ज. व्याचष्टे । ४ छ. °नेनैवं वै° । ५ घ. °सं प्र° । ६ ग. झ. °ह्मस्वरू° । ७ ग. झ. गमित° । ८ ग. °स्थाऽपि प° । ९ ख. झ. °ह्मस्वरू° । १० घ. °र्हि वर्ते तत्राऽऽह निःसङ्ग इति नि° ।

समाधित्सायां यत्सुखमुत्पद्यते तद्विषयाभिलाषादपि मनो निरोद्धव्यमित्याह—**नाऽऽस्वादयेदिति** । तत्रेति समाध्यवस्थोच्यते । किं तु[1] तस्यामवस्थायां सुखं यदुपलभ्यते तदज्ञानविजृम्भितं मिथ्यैवेति प्रज्ञया विवेकेज्ञानेन निस्पृहः सन्भावयेदित्याह—**निःसङ्ग इति** । किं च यच्चित्तं प्राचीनवैराग्याद्युपायेन निश्चलं प्रत्यगात्मप्रवणं प्रसाधितं तद्यदि स्वभावानुसारेण बहिर्निर्गन्तुमिच्छेत्तदा संप्रज्ञातसमाधेरसंप्रज्ञातसमाधिपर्यन्तात्प्रयत्नात्तदात्मन्येवैकीकृत्य तन्मात्रेमापाद्य[3] परिशुद्धपरिपूर्णब्रह्मात्मकः स्वयं तिष्ठेदित्याह—**निश्चरदिति** । प्रथमपादाक्षराणि योजयति—**समाधित्सत इति** । तस्य समाध्यवस्थायामिति शेषः । द्वितीयपादमाकाङ्क्षाद्वारा विवृणोति—**कथमित्यादिना** । निःस्पृहो यथोक्ते सुखेऽनुरागरहितः सन्नित्यर्थः । विवेकरूपा बुद्धिरागन्तुकस्य रज्जुसर्पवत्कल्पितत्वमित्येवमात्मिका तया भावयेदिति संबन्धः । भावनाप्रकारमभिनयति—**यदित्यादिना** । प्रथमार्धस्याक्षरार्थमुक्त्वा तात्पर्यार्थं[5] निगमयति—**ततोऽपीति** । उत्तरार्धं विभजते—**यदेत्यादिना**[6] । पूर्वोक्तसमाध्यनुरोधादात्मन्येव निश्चलस्वभावं सच्चित्तं यथोक्तं सुखरागनिमित्तं तदुपायरागनिमित्तं वा निश्चरद्भवतीति संबन्धः । तच्च चित्तं बाह्यविषयाभिमुख्याद्युक्तोपायेन ज्ञानाभ्यासादिना व्यावर्त्याऽऽत्मन्येव परस्मिन्ब्रह्मणि प्रयत्नतः संप्रज्ञातसमाधिवशादेकी कुर्यात् । असंप्रज्ञातसमाधियुक्तं परिपूर्णं ब्रह्मैवाऽऽपादयेदित्यर्थः । तदेव स्पष्टयति—**चित्स्वरूपेति** ॥ ४९ ॥

**यदा न लीयते चित्तं न च विक्षिप्यते पुनः ।**
**अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा[7] ॥ ४६ ॥**

यथोक्तोपायेन[8] निगृहीतं चित्तं यदा सुषुप्ते[9] न लीयते न च पुनर्विषयेषु विक्षिप्यते, अनिङ्गनमचलं निवातप्रदीपकल्पम्[10][11][12] । अनाभासं न केनचित्कल्पितेन विषयभावेनावभासत इति । यदैवंलक्षणं चित्तं तदा निष्पन्नं ब्रह्म[13] ब्रह्मस्वरूपेण निष्पन्नं चित्तं भवतीत्यर्थः ॥ ४६ ॥

कदा पुनरिदं चित्तं ब्रह्ममात्रमापद्यते तत्राऽऽह—**यदेति** । त्रिविधप्रतिबन्धविधुरं विषयाकाररहितं यदा चित्तमवतिष्ठते तदा[14] ब्रह्म संपन्नं भवतीत्यर्थः । अक्षराणि व्याचष्टे—**यथोक्तेनेत्यादिना** । उपायो ज्ञानाभ्यासादिः । निगृहीतं विषयेभ्यो विमुखीकृतं न लीयते न निद्रापारवश्येन कारणात्मतां गतमित्यर्थः । अचलं रागादि-

---

१ छ. तु समाध्यव° । २ क. ग. झ. °कविज्ञा° । ३ ख. °त्रतामा° । ४ क. ख. °मापद्य । ५ ग. झ. °त्पर्यं नि° । ६ क. यथेत्या° । ७ क. तत्तथा । ८ ङ. छ. °थोक्तेनोपा° । ९ ख. घ. ङ. ज. °पुप्तौ न । १० ख. च. छ. झ. °निर्वात° । ११ झ. °तदी° । १२ क. °कल्पना° । १३ ख. च. °ह्म स्व° । १४ ख. ग. छ. झ. °दा तद्ब्रह्म ।

वासनाशून्यमित्यर्थः । अचलत्वे दृष्टान्तः—निवातेति[1] । किं तु ब्रह्माकारेणेत्येवंलक्षणं चित्तं यदा संपद्यते तदेति योजना । निष्पन्नं ब्रह्मेत्युक्तमेव स्फुटयति—ब्रह्मस्वरूपेणेति ॥ ४६ ॥

**स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम् ॥**
**अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥ ४७ ॥**

यथोक्तं परमार्थसुखमात्मसत्यानुबोधलक्षणं स्वस्थं स्वात्मनि स्थितम् । शान्तं सर्वानर्थोपशमरूपम् । सनिर्वाणं निर्वृतिर्निर्वाणं[2] कैवल्यं सह निर्वाणेन वर्तते । तच्चाकथ्यं न शक्यते कथयितुम् । अत्यन्तासाधारणविषयत्वात् । सुखमुत्तमं निरतिशयं हि तद्योगिप्रत्यक्षमेव । न जातमित्यजं यथा विषयविषयम्[3] । अजेनानुत्पन्नेन[4] ज्ञेयेनाव्यतिरिक्तं सत्स्वेन[5] सर्वज्ञरूपेण सर्वज्ञं ब्रह्मैव सुखं परिचक्षते कथयन्ति ब्रह्मविदः ॥ ४७ ॥

असंप्रज्ञातसमाध्यवस्थायां येन रूपेण चित्तमभिनिष्पद्यते तद्ब्रह्म[6]स्वरूपं विशिनष्टि—**स्वस्थमिति** । ज्ञेयेनाव्यतिरिक्तमिति शेषः । तत्र विदुषां संमतिमुदाहरति—**सर्वज्ञमिति** । यथोक्तमित्यसंप्रज्ञातसमाधिलक्षणं ब्रह्मेत्यर्थः । तस्य परमपुरुषार्थरूपतामाह—**सुखमिति** । वैषयिकं सुखं व्यवच्छेत्तुं परमार्थेति विशेषणम् । किं तत्र ज्ञानेनेत्याशङ्क्याऽऽह[7]—**आत्मेति** । तस्य सत्यस्याऽऽगमाचार्यानुरोधिना बोधेन लक्ष्यते प्राप्यते ब्रह्मेति[8] तथोच्यते । तस्य स्वमहिमप्रतिष्ठत्वमाह—**स्वात्मनीति** । सर्वस्य त्रिविधस्यानर्थस्योपशमेनो[9]पलक्षितत्वादपि पुरुषार्थत्वसिद्धिरित्याह—**सर्वेति** । निरतिशयानन्दाभिव्यक्तिर्निरवशेषानर्थोच्छित्तिश्चेत्येवंलक्षणं मोक्षमाचक्षते । तत्कथमिदं ब्रह्मेत्याशङ्क्याऽऽह—**सनिर्वाणमिति** । तस्य क्षीरगुडादिमाधुर्यभेदस्येव स्वानुभवमात्राधिगम्य[10]त्वादवाच्यत्वमाह—**तच्चेति** । यदुक्तं परमार्थसुखमिति तदिदानीमुपपादयति—**सुखमिति** । तर्हि सर्वेषामेव[11] तद्भूयादित्याशङ्क्याऽऽह—**योगीति** । ज्ञानस्याजातत्वे वैधर्म्यदृष्टान्तमाह—**यथेति** ॥ ४७ ॥

---

१ ख. ग. च. छ. झ. निर्वाते° । २ घ. झ. निवृत्तिर्नि° । ज. निर्वृत्तिनिर्वा° । ३ क. छ. °यम° । ४ ज. °नुपपन्ने° । ५ च. छ. सत्सुखेन । ६ ग. झ. °ह्मरू° । ७ ग. छ. झ. °नेत्यत्राऽऽह । ८ ग. झ. °ति यथो° । ९ ग. झ. °शमनो° । १० ख. °गन्तव्यत्वा° । ११ ग. °मेवंभावादि° । घ. °षामेव मायादि° ।

न कश्चिज्जायते जीवः संभवोऽस्य न विद्यते ।
एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥ ४८ ॥

इति[1] गौडपादीयकारिकायामद्वैताख्यं तृतीयं
प्रकरणम् ॥ ३ ॥ ॐ तत्सत् ॥

सर्वोऽप्ययं मनोनिग्रहादिर्मृल्लोहादिवत्सृष्टिरुपासना[2] चोक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन न परमार्थसत्येति । परमार्थसत्यं तु न कश्चिज्जायते जीवः कर्ता भोक्ता च नोत्पद्यते केनचिदपि प्रकारेण । अतः स्वभावतोऽजस्यास्यैकस्याऽऽत्मनः संभवः कारणं न विद्यते नास्ति । यस्मान्न विद्यते[3]ऽस्य कारणं तस्मान्न कश्चिज्जायते जीव इत्येतत् । पूर्वेषूपायत्वेनोक्तानां सत्यानामेतदुत्तमं[4] सत्यं यस्मिन्सत्यस्वरूपे[5] ब्रह्मण्यणुमात्रमपि किंचिन्न जायत इति ॥ ४८ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य[6] परमहंसपरिव्राजकाचार्यस्य शंकरभगवतः कृतौ[7] गौडपादीयभाष्य
आगमशास्त्रविवरणेऽद्वैताख्यं तृतीयप्रकरण-
भाष्यं समाप्तम् ॥ ३ ॥
ॐ तत्सत् ॥

उक्तानामुपायानां परमार्थसत्यत्वे सत्यद्वैतहानिः । अन्यथा तदप्रमितिरित्याशङ्क्याऽऽह—न कश्चिदिति । तत्र हेतुमाह—संभवोऽस्येति । श्लोकाक्षराणि व्याकर्तुं भूमिकां[8] व्याकरोति—सर्वोऽपीति । व्यावहारिकसत्यत्वमेवोपायानां न परमार्थसत्यत्वं[9]मित्यङ्गीकृत्य[10][11] पारमार्थिकसत्यस्य प्रतिपत्त्युपायत्वेनैवोक्तेत्याह—मृदिति । यदुक्तं मनोनिग्रहादीनां परमार्थत्वेऽद्वैतहानिरिति तत्राऽऽह—नेत्यादिना । तेषामपरमार्थत्वे कथमद्वैतप्रतिपत्तिरित्यपि न, व्यावहारिकसत्यानामपि तत्प्रमितिहेतुत्वस्य प्रतिबिम्बवत्तदुपपत्तेरिति भावः । उपायानां व्यावहारिकसत्यत्वेनैव पारमार्थिकं सत्यत्वं किं न स्यादिति तत्राऽऽह—परमार्थेति । तदेव स्पष्टयति—कर्तेति । स्वभावतोऽजत्वं हेतूकर्तव्यम् । तत्रैव हेत्वन्तरमाह—अत इति । हेत्वन्तरमेव स्पष्टयति—यस्मा-

---

१ च. °तिश्रीउपदेशग्रन्थे द्वै° । घ. ङ. °ति माण्डूक्योपनिषद्वार्तिके तृतीयमद्वैताख्यं प्र° । २ झ. °ष्टिरूपावास° । ३ ज. °ते का° । ४ झ. °तत्तदु° । ५ च. °पेऽणु° । ६ छ. °व्यप° । ७ ख. घ. ङ. च. झ. °कृतावाग° । ८ ग. छ. झ. °कां क° । ९ छ. °र्थत्व° । १० घ. °त्वमङ्गी° । ११ ग. ङ. °त्य सृष्टिः पा° ।

दिति। उत्तरार्धं व्याचष्टे—पूर्वेष्विति। पूर्वेषु ग्रन्थेष्विति शेषः। इतिशब्दोऽद्वैत-प्रकरणपरिसमाप्तिं द्योतयति ॥ ४८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां गौडपाद[1][कारिका]भाष्यटीकायामद्वैताख्यं तृतीयं प्रकरणं समाप्तम् ॥ ३ ॥

---

अथालातशान्त्याख्यं चतुर्थप्रकरणम्।

---

**ज्ञानेनाऽऽकाशकल्पेन धर्मान्यो गगनोपमान्।**
**ज्ञेयाभिन्नेन संबुद्धस्तं वन्दे द्विपदां वरम् ॥ १ ॥**

ओंकारनिर्णयद्वारेणाऽऽगमतः प्रतिज्ञातस्याद्वैतस्य बाह्यविषयभेद[2]-वैतथ्याच्च[3] सिद्धस्य पुनरद्वैते[4] शास्त्रयुक्तिभ्यां साक्षान्निर्धारितस्यैतदुक्तमं सत्यमित्युपसंहारः कृतः। अन्ते तस्यैतस्याऽऽगमार्थस्याद्वैतदर्शनस्य प्रति-पक्षभूता द्वैतिनो वैनाशिकाश्च[5] तेषां चान्योन्यविरोधाद्रागद्वेषादिक्लेशा-स्पदं दर्शनमिति मिथ्यादर्शनत्वं[6] सूचितम्। क्लेशानास्पदत्वात्[7]सम्यग्द-र्शनमित्यद्वैतदर्शनं स्तूयते। तदिह विस्तरेणान्योन्यविरुद्धतयाऽसम्य-ग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेनाद्वैतदर्शनसिद्धिरुपसंहर्तव्याऽऽवीतन्या-येनेत्यलातशान्तिरारभ्यते। तत्राद्वैतदर्शनं(न) संप्रदायकर्तुरद्वैतस्वरूपेणैव नमस्कारार्थोऽयमाद्यश्लोकः। आचार्यपूजा ह्यभिप्रेतार्थसिद्ध्यर्थेष्यते[8] शास्त्रारम्भे। आकाशेनेषदसमाप्तमाकाशं[9] (क)ल्पमाकाशतुल्यमेतत्[10]। तेनाऽऽकाशकल्पेन ज्ञानेन, किम्, धर्मानात्मनः, किंविशिष्टान्गगनोपमा-न्गगनमुपमा येषां ते गगनोपमास्तानात्मनो[11] धर्मान्। ज्ञानस्यैव पुनर्वि-शेषणम्—ज्ञेयैर्धर्मैरात्मभिरभिन्नमग्न्युष्णवत्सवितृप्रकाशवच्च ज्ञानं तेन ज्ञेयाभिन्नेन ज्ञानेनाऽऽकाशकल्पेन ज्ञेयात्मस्वरूपाव्यतिरिक्तेन गगनो-पमान्धर्मान्यः संबुद्धः संबुद्धवानित्ययमेवेश्वरो यो नारायणाख्यस्तं वन्देऽभिवादये द्विपदां वरं द्विपदोपलक्षितानां पुरुषाणां वरं प्रधानं

---

१ ख. ग. घ. ङ. छ. ज. झ. °पादीयभा°। २ झ. °यविशेषवै°। ३ क. °च्च प्रसि°। ४ च. घ. °द्वैतशा°। ५ ख. ज. °कादयस्तेषां। घ. °कास्तेषां। झ. काश्चैते°। ६ झ. °थ्यात्वद°। ७ छ. °त्वादात्मैकत्वबुद्धिरेव सम्य°। ८ छ. °द्ध्यर्थमिष्य°। ९ घ. °दसामान्यमा°। १० घ. °शतुल्य°। ११ ज. °त्मध°।

**पुरुषोत्तममित्यभिप्रायः। उपदेष्टृनमस्कारमुखेन(ण) ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिह प्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति ॥ १ ॥**

आद्यन्तमध्यमङ्गला ग्रन्था: प्रचारिणो भवन्तीत्यभिप्रेत्या[1]ऽऽदावोंकारोच्चारणवदन्ते[2] परदेवताप्रणामवन्मध्येऽपि परदेवतारूपमुपदेष्टारं प्रणमति—**ज्ञानेति**। पूर्वोत्तरप्रकरण-संबन्धसिद्ध्यर्थं पूर्वप्रकरणत्रये वृत्तमर्थं क्रमादनुद्रवति[3]—**ओंकारेति** । अद्वैत इत्यद्वै-तोपलक्षितं तृतीयं प्रकरणमुच्यते । चतुर्थं प्रकरणमवतारयितुमुपयुक्तमर्थान्तरमनुव-दति—**तस्येति** । द्वैतिनो भेदवादिनो वैनाशिकव्यतिरिक्ता गृह्यन्ते। वैनाशिका नैरात्म्यवादिनः । रागद्वेषादीत्यादिशब्देनातिरिक्तक्लेशोपादानम् । पक्षान्तराणां मिथ्यादर्शनत्वसूचनं कुत्रोपयुज्यते तत्राऽऽह—**क्लेशेति** । पातनिकामेवं कृत्वा समनन्तरप्रकरणप्रवृत्तिं प्रतिजानीते—**तदिहेति**। तदसम्यग्दर्शनत्वमिति संबन्धः[4] । आवीतन्यायो व्यतिरेकन्यायः । यथा यत्कृतकं तदनित्यमित्यन्वयादनित्यत्वेऽवग-तेऽपि यन्नानित्यं न तत्कृतकमिति व्यतिरेकोऽपि[5] व्यभिचारशङ्कानिरासित्वेन[6] व्याप्ति-निश्चयार्थमिष्यते। तथा तर्कतः संभावितस्या[7]ऽऽगमेनावगतस्यापि प्रतिपक्षभूतवादान्तरापा-करणप्रपञ्चमन्तरेण पाक्षिकासम्यक्त्वशङ्का स्यादद्वैतदर्शनस्येति तत्प्रतिषेधेन तत्सिद्धि-रुपसंहर्तव्येत्यलातशान्तिदृष्टान्तोपलक्षितमारभ्यते प्रकरणमित्यर्थः । विशेषेण स्पष्टमितो वीतः स न[8] भवतीत्यवीतः। अवीत एवाऽऽवीतः। तेन न्यायेन व्यतिरेकेणेति यावत् । प्रकरणस्य तात्पर्यमेवं दर्शयित्वा प्रथमश्लोकस्य तात्पर्यमाह—तत्रेति[9]। तत्र चतुर्थप्रकरणं सप्तम्या परामृश्यते । किमित्यद्वैतरूपेणाऽऽचार्यो नमस्क्रियते तत्राऽऽह—**आचार्येति** । अभिप्रेतार्थः शास्त्रस्याविघ्नेन परिसमाप्तिस्तदर्थे विप्रतिपत्त्यादिव्यावृत्तिश्च । आकाशस्य[10] जडत्वाधिक्याज्ज्ञानं स्वप्रकाशमाकाशेनेषदसमाप्तं वक्तव्यम्। विभुत्वादावुपमा द्रष्टव्या। बहुवचनमुपाधिकल्पितभेदाभिप्रायम्। तेषामपि चिन्मात्रत्वं विवक्षित्वोक्तम्—**ज्ञानस्यै-वेति**। तेनेत्यादि पुनरनुवादेनान्वयमन्वाचष्टे। आचार्यो हि पुरा बदरिकाश्रमे नरनारा-यणाधिष्ठिते[11] नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत । ततो[12] भगवानतिप्रसन्नस्तस्मै विद्यां प्रादादिति[13] प्रसिद्धं परमगुरुत्वं परमेश्वरस्येति[14] भावः । ननु प्रकरणे प्रारभ्यमाणे प्रतिपद्ये प्रमेये वक्तव्ये किमित्युपदेष्टा नमस्क्रियते तत्राऽऽह—**उपदेष्टॄिति** ॥ १ ॥

---

१ ग. °त्याऽऽह—ओंका° । २ ग. झ. °न्ते च प°। ३ छ. °नुवदति । ४ ज. °न्धः । अवी° । झ. °न्धः । अविनीत° । ५ ज. °व्यतिरेकश° । ६ क. °रासितत्वे° । ७ ग. झ. °न संभ° । ८ ज. °तः । ते° । ९ ग. छ. झ. °ति च । त° । १० घ. °शस्याजत्वा° । ११ घ. °तेन ना° । १२ झ. तत्त्वतो । १३ ख. °ति सि° । १४ क. °श्वर इति ।

**अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।**
**अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥ २ ॥**

अधुनाऽद्वैतदर्शनयोगस्य नमस्कारस्तत्स्तुतये। स्पर्शनं स्पर्शः संबन्धो न विद्यते यस्य योगस्य केनाचित्कदाचिदपि सोऽस्पर्शयोगो ब्रह्मस्वभाव एव, वै नामेति ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्ध इत्यर्थः । स च सर्वसत्त्वसुखो भवति। कश्चिदत्यन्तसुखसाधनविशिष्टोऽपि[1] दुःखैरूपः[2], यथा तपः । अयं तु न तथा । किं तर्हि सर्वसत्त्वानां सुखः । तथेह[3] भवति कश्चिद्विषयोपभोगः सुखो न हितः। अयं तु सुखो हितश्च । नित्यमप्रचलितस्वभावत्वात् । किं चाविवादो विरुद्धवदनं विवादः[4] पक्षप्रतिपक्षपरिग्रहेण[5] यस्मिन्न विद्यते सोऽविवादः । कस्मात् । यतोऽविरुद्धश्च य ईदृशो योगो देशित उपदिष्टः शास्त्रेण तं नमाम्यहं प्रणमामीत्यर्थः ॥ २ ॥

इदानीमद्वैतदर्शनयोगस्तुतये[6] तन्नमस्कारं प्रस्तौति—**अस्पर्शेति** । श्लोकस्य तात्पर्यमाह—**अधुनेति** । तस्य च स्तुतिस्तत्साधनेषु प्रवृत्तावुपयुज्यते । संप्रत्यक्षराणि व्याकुर्वन्नस्पर्शयोगशब्दं व्याकरोति—**स्पर्शनमिति** । योगस्यान्यसंबन्धप्रसङ्गाभावात्कथमस्पर्शत्वमित्याशङ्क्याऽऽह—**ब्रह्मेति** । निपातयोरर्थं कथयति—**वै नामेति** । सर्वेषां सत्त्वानां देहभृतां सुखयतीति व्युत्पत्त्या सुखहेतुत्वं ब्रह्मस्वभावस्य सुखविशेषणेन दर्शयति—**स चेति** । सुखहेतावपि ब्रह्मस्वभावे विवक्षितं विशेषं दर्शयति—**भवतीति** । हितविशेषणस्य तात्पर्यमाह—**तथेह[7] भवतीत्यादिना** । तस्य हितत्वे हेतुमाह—**नित्यमिति** । तस्यैव विशेषणान्तरमाह—**किं चेति** । तत्र हेतुं प्रश्नपूर्वकमाह—**कस्मादिति** । आत्मप्रकाशत्वाद्ब्रह्मस्वभावस्याविरुद्धत्वम्[8] । न हि कस्यचिदात्मप्रकाशो विरुद्धो भवतीत्यर्थः । यथोक्तयोगज्ञानमार्गस्य[9] संप्रदायागतत्वमाह—**य ईदृश इति** । तन्नमस्कारव्याजेन तस्य स्तुतिस्तदुपायेषु[10] श्रोतृप्रवृत्त्यर्थमत्र विवक्षितेत्याह—**तं नमामीति** ॥ २ ॥

**भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि ।**
**अभूतस्यापरे[11] धीरा विवदन्तः परस्परम् ॥ ३ ॥**

---

१ च. 'ष्टो दुः' । २ घ. छ. 'खस्वरू' । ३ ख. घ. ज. यथेह । ४ च. 'दः प्रतिप' । ५ च. झ. 'ग्रहो य' । ६ झ. 'योगः स्तूयते त' । ७ ख. घ. झ. यथेह । ८ झ. 'द्धम्' । ९ ग. छ. झ. 'क्तस्य यो' । १० ज. 'तितदु' । ११ च. 'परं धी' ।

कथं द्वैतिनः परस्परं विरुध्यन्त इति। उच्यते। भूतस्य विद्यमानस्य वस्तुनो जातिमुत्पत्तिमिच्छन्ति वादिनः केचिदेव हि सांख्या न सर्व एव द्वैतिनः। यस्मादभूतस्याविद्यमानस्यापरे वैशेषिका नैयायिकाश्च धीरा धीमन्तः प्राज्ञाभिमानिन इत्यर्थः। विवदन्तो[1] विरुद्धं वदन्तो ह्यन्योन्यमिच्छन्ति जेतुमित्यभिप्रायः॥ ३॥

अद्वैतदर्शनस्याविरुद्धत्वेनाविवादत्वं विशदीकर्तुं द्वैतिनां विवादं तावदुदाहरति— भूतस्येति। एवं विरुद्धं वदन्तो मिथो जेतुमिच्छन्तीत्याह—विवदन्त इति। प्रश्नपूर्वकं श्लोकाक्षराणि योजयति—कथमित्यादिना। एवकारार्थे हेतुमाह—यस्मादिति[3]। प्राज्ञाभिमानिनो[4] जातिमिच्छन्तीति पूर्वेण संबन्धः। चतुर्थपादं साध्याहारं व्याकरोति—विवदन्त इति॥ ३॥

भूतं न जायते किंचिदभूतं नैव जायते।
विवदन्तो द्वया ह्येवमजातिं ख्यापयन्ति ते॥ ४॥

तैरेवं विरुद्धवदनेनान्योन्यपक्षप्रतिषेधं[5] कुर्वद्भिः किं[6] ख्यापितं भवतीति। उच्यते। भूतं विद्यमानं वस्तु न जायते किंचिद्विद्यमानत्वादेवाऽऽत्मवदित्येवं वदन्नसद्वादी सांख्यपक्षं प्रतिषेधति सज्जन्म। तथाऽभूतमविद्यमानमविद्यमानत्वान्नैव जायते शशविषाणवदित्येवं वदन्सांख्योऽप्यसद्वादिपक्षमसज्जन्म प्रतिषेधति। विवदन्तो विरुद्धं वदन्तो द्वया द्वैतिनोऽप्येतेऽन्योन्यस्य पक्षौ सदसतोर्जन्मनी प्रतिषेधन्तोऽजातिमनुत्पत्तिमर्थात्ख्यापयन्ति प्रकाशयन्ति ते॥ ४॥

पक्षद्वयनिषेधमुखेन सिद्धमर्थं कथयति—भूतमित्यादिना। श्लोकाक्षरव्याख्यानार्थमाकाङ्क्षां निक्षिपति—तैरिति। तत्राऽऽद्यं पादमवतार्य व्याकरोति—उच्यत इति। द्वितीयपादं विभजते—तथेति। द्वितीयार्धं विभजते—विवदन्त इत्यादिना। सदसदतिरिक्तवस्त्वभावाद्वस्तुत उत्पत्तेरनुपपत्तिरित्याह—अर्थादिति॥ ४॥

ख्याप्यमानामजातिं तैरनुमोदामहे वयम्।
विवदामो न तैः सार्धमविवादं निबोधत॥ ५॥

तैरेवं ख्याप्यमानामजातिमेवमस्त्वित्यनुमोदामहे केवलं न तैः सार्धं

---

१ क. °न्तोऽन्यो°। २ च. छ. झ. °न्तोऽन्यो°। ३ ग. छ. झ. °ति। प्रज्ञा°। ४ ग. झ. °नो भूतस्य जा°। ५ च. °तिबोधं। ६ झ. किं व्याख्यातं। ७ ज. °त्वादात्म°। ८ ख. घ. ज. °नत्वा°। ९ क. °या अद्वै°। १० च. झ. °न्यप°।

विवदामः[1] पक्षप्रतिपक्ष[2]ग्र[3]हणेन । यथा तेऽन्योन्यमित्यभिप्रायः । अतस्तमविवादं विवादरहितं परमार्थदर्शनमनुज्ञातमस्माभिर्निबोधत हे शिष्याः ॥ ५ ॥

तर्हि प्रतिवादिभिरुक्तत्वादजातिरपि भवता प्रत्याख्येयेत्याशङ्क्याऽऽह—**ख्याप्यमानामिति** । प्रतिवादिभिः सह विवादाभावे फलितमाह—**अविवादमिति** । अक्षराणि व्याचष्टे—**तैरित्यादिना** । अद्वैतवादिनो द्वैतवादिभिर्विवादाभावे वैधर्म्यदृष्टान्तमाह—**यथा त इति** । चतुर्थपादार्थमाह—**अत इति** ॥ ५ ॥

**अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः ।**
**अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥ ६ ॥**

सदसद्वादिनः सर्वेऽपीति । पुरस्तात्कृतभाष्यश्लो(ष्यः श्लो)कः[4] ॥६॥

जातस्यैव जन्मनाऽऽनर्थक्यादनवस्थानाच्चाजातस्यैव पदार्थस्य जन्म सद्वादिनोऽसद्वादिनश्च सर्वेऽपि स्वी कुर्वन्तीति परपक्षमनुवदति—**अजातस्येति** । तत्र शिष्टाभीष्टदोषं[5] प्रदर्श्याभ्यनुजानाति—**अजातो हीति** । के ते वादिनो यैरेवमिष्यते तत्राऽऽह—**सदसदिति** । अवशिष्टानि श्लोकाक्षराणि व्याख्यातत्वान्न पुनर्व्याख्यानसापेक्षाणीत्याह—**पुरस्तादिति** ॥ ६ ॥

**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा[6] ।**
**प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥ ७ ॥**
**स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् ।**
**कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ ८ ॥**

उक्तार्थानां श्लोकानामिहोपन्यासः परवादिपक्षाणामन्योन्यविरोधख्यापितानु[7]मोदनप्रदर्शनार्थः ॥ ७ ॥ ८ ॥

परिणामिब्रह्मवादे र्यदब्रह्म[8]वादिभिर्दूषणमुच्यते तदप्यनुज्ञातमेवेति मत्वाऽऽह—**न भवतीति** । अमृतं हि ब्रह्म न तद्रूपे स्थिते मर्त्यं भवितुमर्हति । स्थितरूपविरोधात् । न च मर्त्यं[9] कार्यं[10] स्वरूपे[11] स्थिते[12] प्रलयावस्थायाममृतं ब्रह्म संपद्यते । नष्टेऽपि स्वरूपे तस्यैवाभावान्नान्यथात्वमित्यभिप्रेत्याऽऽह—**प्रकृतेरिति** । किं च यस्य परिणामवादिनः

---

१ झ. °मः प्रतिपक्षपक्षपरिग्र° । २ ख. घ. ङ. °क्षपरिग्र° । ३ घ. ङ. च. ज. °ग्रहेण । य° । ४ ख. झ. श्लोकाः । ५ छ. °भीष्टं दो° । ६ झ. यथा । ७ ख. च. ङ. °नुपपत्त्यनुमो° । छ. °नुपपत्त्याऽनुमो° । ८ घ. घ. ङ. छ. यद्ब्रह्म° । ९ ज. कार्यस्व° । १० ख. °र्थे कार्यस्व° । ११ क. °रूपस्थि° । १२ क. स्थितं ।

स्वभावेनामृतः सन्परमात्माख्यो धर्मशब्दितो भावो मर्त्यतां कार्यभावापत्त्या गच्छति तस्य कृतकेन समुच्चयानुष्ठानेनामृतो जातो मुक्तो वक्तव्यः । स च कथं निश्चलः स्थातुं पारयति । यत्कृतकं तदनित्यमितिन्यायविरोधादित्याह—स्वभावेनेति । पुनरुक्तिमाशङ्क्य प्रत्यादिशति—उक्तार्थानामिति ॥ ७ ॥ ८ ॥

**सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।**
**प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥ ९ ॥**

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति काऽसावित्याह—सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः सा भूतभविष्यत्कालयोरपि योगिनां न विपर्येति । तथैव सा । तथा स्वाभाविकी द्रव्यस्वभावत एव यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणा, साऽपि न कालान्तरे व्यभिचरति देशान्तरे च । तथा सहजाऽऽत्मना सहैव जाता यथा पक्ष्यादीनामाकाशगमनादिलक्षणा । अन्याऽपि या काचिदकृता केनचिन्न कृता यथाऽपां निम्नदेशगमनादिलक्षणा । अन्याऽपि या काचित्स्वभावं न जहाति सा सर्वा प्रकृतिरिति विज्ञेया लोके । मिथ्याकल्पितेषु लौकिकेष्वपि वस्तुषु प्रकृतिर्नान्यथा भवति किमुताजस्वभावेषु परमार्थवस्तुष्वमृतत्वलक्षणा प्रकृतिर्नान्यथा भवतीत्यभिप्रायः ॥ ९ ॥

प्रकृतेरन्यथाभावो न कथंचिदित्युक्तं तत्र प्रकृतिशब्दार्थं कथयति—**सांसिद्धिकीति** । श्लोकाक्षराणि व्याकुर्वन्प्रकृतेरन्यथात्वाभावे हेतुमाह—**यस्मादिति** । तस्मादजाऽमृतस्वभावा प्रकृतिर्न विपर्येतीति किमु वक्तव्यमिति योजना । कैमुतिकन्यायद्योतनार्थोऽपिशब्दः । विवक्षितं हेतुं स्फुटयितुं प्रश्नपूर्वकं विभजते—**काऽसावित्यादिना** । साङ्गयोगमनुष्ठाय परिसमापनं संसिद्धिः । सिद्धानामणिमाद्यैश्वर्यप्राप्तौ सामग्रीसंपन्नानाम् । या काचित्स्वभावं न जहाति घटस्य घटत्वं पटस्य पटत्वमित्यादिकेति शेषः । प्रासङ्गिकं प्रकृतिशब्दार्थमुक्त्वा प्रकृतेरन्यथात्वाभावे प्रागुक्ते स्वसिद्धान्ते यत्फलति तदिदानीं किंपुनर्न्यायेन कथयति—**मिथ्येति** ॥ ९ ॥

---

१ घ. धर्मवादिनो । २ क. कृतके । ३ ज. °च्चयोऽनु° । ४ ग. छ. झ. जीवो । ५ घ °रुक्तमा° । ६ च. °जाऽव्याकृ° । झ. °जा कृतका यथा । प्र° । ७ झ. सा । ८ घ. च. °क्सिद्धिस्त° । ९ च. °व स्वा° । ख. ज. °व या स्वा° । १० घ. सा स्वा° । ११ ज सा न । १२ झ. °जा सा आत्म° । १३ झ. °पि का° । १४ घ. °पि का° । १५ च. छ. °तिर्ज्ञेया । १६ घ. °क्षणप्र° । १७ °तीति भावः ॥ ९ ॥ ख. घ. ङ. ज. °तीति ॥ ९ ॥ १८ क. घ. °भावान्न ज° । १९ क. °क्ते सि° ।

**जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः ।**
**जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥ १० ॥**

किंविषया पुनः सा प्रकृतिर्यस्या अन्यथाभावो वादिभिः कल्प्यते कल्पनायां[1] वा को दोष इत्याह—जरामरणनिर्मुक्ताः । जरामरणादिसर्वविक्रियावर्जिता[2] इत्यर्थः । के[3] । सर्वे धर्माः सर्व आत्मान[4] इत्येतत्स्वभावतः प्रकृतितः । एवंस्वभावाः सन्तो धर्मा जरामरणमिच्छन्त इच्छन्त इवेच्छन्तो रज्ज्वामिव सर्पमात्मनि कल्पयन्तश्च्यवन्ते स्वभावतश्चलन्तीत्यर्थः । तन्मनीषया जन्ममरणचिन्तया तद्भावभावितत्वदोषेणेत्यर्थः ॥ १० ॥

प्रासङ्गिकीमेव[5] जीवानां प्रकृतिं[6] दर्शयितुं प्रक्रमते—जरेति । आत्मानो हि[7] सर्वविक्रियारहिताः स्वभावतो भवन्तीत्यर्थः । तेषामुक्तप्रकृतेरन्यथात्वे का क्षतिरित्याशङ्क्याऽऽह—जरामरणमिति । सर्वविक्रियाशून्ये स्वात्मनि विक्रियाकल्पनायां तद्भासनया[9] स्वभावहानिः स्यादित्यर्थः । श्लोकाक्षराणि व्याकर्तुमाकाङ्क्षां दर्शयति—किंविषयेति । आश्रयविषयो विषयशब्दः । अप्रकृतं प्रकृतेराश्रयनिरूपणमित्याशङ्क्याऽऽह—यस्या इति । प्रश्नान्तरं[10] प्रकरोति—कल्पनायामिति[11] । तत्र पूर्वार्धमुत्तरत्वेन व्याकरोति—आहेत्यादिना । उत्तरार्धं विभजते—एवंस्वभावा इति ॥ १० ॥

**कारणं यस्य वै कार्यं कारणं तस्य जायते ।**
**जायमानं कथमजं भिन्नं नित्यं कथं च तत् ॥ ११ ॥**

कथं सज्जातिवादिभिः सांख्यैरनुपपन्नमुच्यत इत्याह[12] वैशेषिकः । कारणं मृद्वदुपादानलक्षणं यस्य वादिनो वै कार्यं कारणमेव कार्याकारेण परिणमते यस्य वादिन इत्यर्थः । तस्याजमेव सत्प्रधानादि कारणं महदादि कार्यरूपेण[13] जायत इत्यर्थः । महदाद्याकारेण चेज्जायमानं प्रधानं कथमजमुच्यते[14] तैर्विप्रतिषिद्धं चेदं जायतेऽजं चेति । नित्यं च तैरुच्यते । प्रधानं भिन्नं विदीर्णं स्फुटितमेकदेशेन सत्कथं नित्यं भवे-

---

१ ज. झ. °यां को° । २ छ. °यारहिता । ३ च. के ते स° । ४ क. आत्मन । ५ ज. °मेवं जी° । ६ ग. °तिं प्रद° । ७ ख. हि वि° । ८ घ. ङ. °मुक्ते प्र° । ज. °मुक्तः प्र° । ९ ग. झ. °सनायाः स्व° । १० ख. °रं क° । ११ ग. छ. झ. °नायां वेति । १२ च. इत्यत आह । १३ च. °रूपं जा° । १४ घ. ङ. च. °ते विप्र° ।

दित्यर्थः। न हि सावयवं घटादि[1] एकदेशस्फुटनधर्मि[2] नित्यं[3] दृष्टं लोक इत्यर्थः। विदीर्णं[4] च स्यादेकदेशेनाजं नित्यं चेति। एतद्विप्रतिषिद्धं तैरभिधीयत इत्यभिप्रायः॥ ११॥

प्रासङ्गिकं परित्यज्य सांख्यपक्षे वैशेषिकादिभिरुच्यमानं दूषणमभ्यनुज्ञातमनुभाषते—कारणमिति। कारणस्य जायमानत्वे का हानिरित्याशङ्क्याऽऽह—जायमानमिति। सावयवत्वाच्च प्रधानस्य नित्यत्वानुपपत्तिरित्याह—भिन्नमिति। श्लोकस्य तात्पर्यमाह—कथमिति। तत्र प्रथमपादाक्षराणि योजयति—कारणमित्यादिना। तदेव स्पष्टयति—कारणमेवेति। द्वितीयपादं विभजते—तस्येति। प्रधानादीत्यादिशब्देन तदवयवाः सत्त्वादयो गृह्यन्ते। महदादीत्यादिशब्देनाहंकारादिग्रहणम्। तृतीयपादं व्याकरोति—महदादीति। विप्रतिषेधं विशदयति—जायत इति। चतुर्थपादार्थमाह—नित्यं चेति। विमतमनित्यं सावयवत्वाद्घटादिवदित्यभिप्रेत्य दृष्टान्तं साधयति—न हीति। सांख्यस्मृतिविरुद्धमनुमानमित्याशङ्क्याऽऽह—विदीर्णेति॥ ११॥

**कारणाद्यद्यनन्यत्वमतः कार्यमजं यदि।**
**जायमानाद्धि वै कार्यात्कारणं ते कथं ध्रुवम्॥ १२॥**

उक्तस्यैवार्थस्य स्पष्टीकरणार्थमाह—कारणादजात्कार्यस्य यद्यनन्यत्वमिष्टं त्वया ततः कार्यमजमिति प्राप्तम्। इदं चान्यद्विप्रतिषिद्धं कार्यमजं चेति तव। किं चान्यत्कार्यकारणयोरनन्यत्वे जायमानाद्धि वै कार्यात्कारणमनन्यन्नित्यं ध्रुवं च ते कथं भवेत्। न हि कुक्कुट्या एकदेशः पच्यत एकदेशः प्रसवाय कल्प्यते॥ १२॥

किं च कार्यकारणयोरभेदे किं कारणाभिन्नं कार्यं किं वा कार्याभिन्नं कारणमिति विकल्प्याऽऽद्यमनुवदति—कारणादिति। अतोऽस्मिन्पक्षे कार्यमजं स्यात्। तथाविधकारणाभिन्नत्वादिति दूषयति—अत इति। द्वितीयमनुद्रवति—यदीति। जायमानात्कार्यात्कारणमभिन्नं यदीति योजना। न तर्हि कारणं ध्रुवं भवितुमर्हति कार्याभिन्नत्वात्तस्य चाध्रुवत्वादिति दूषयति—कारणमिति। श्लोकस्य तात्पर्यमाह—उक्तस्येति। कार्यकारणयोरभेदवादे विप्रतिषेधो दर्शितः। तस्यैव दृढीकरणार्थमयं श्लोक इत्यर्थः। पूर्वार्धाक्षरोत्थमर्थमाह—कारणादिति। प्राप्तेरनिष्टपर्यवसायि-

---

१ छ. °दिरेक°। २ छ. °देशे स्फु°। ३ ख. घ. ङ. ज. °त्वं च दृ°। ४ ख. °दीर्णे च। ५ क. साध्यत्वा°। ६ ख. घ. ङ. °कुटस्यैक°। ७ च. छ. कल्पते। ८ छ. °नुवदति। ९ घ. °त्कार्यका°।

त्वमाह—इदं चेति । प्रधानस्याजत्वं जायमानत्वं च विप्रतिषिद्धमित्युक्तम् । ततोऽन्यदित्युक्तमेव व्यनक्ति—कार्यमिति । अभेदेऽपि मायावादे नैष दोषः कारणस्य कार्यादनन्यत्वानभ्युपगमात् । कार्यस्यैव कारणमात्रत्वाङ्गीकारादिति मत्वाऽऽह—तवेति । द्वितीयार्धं विभजते—किं चान्यदिति । अभेदवादेऽपि कार्यस्यानित्यत्वं कारणस्य नित्यत्वमिति व्यवस्था किमिति न भवतीत्याशङ्क्याऽऽह—न हीति ॥ १२ ॥

अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ।
जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ॥ १३ ॥

किं चान्यदजादनुत्पन्नाद्वस्तुनो जायते यस्य वादिनः कार्यं दृष्टान्तस्तस्य नास्ति वै, दृष्टान्ताभावेऽर्थादजान्न किंचिज्जायत इति सिद्धं भवतीत्यर्थः। यदा पुनर्जाताज्जायमानस्य वस्तुनोऽभ्युपगमः, तदप्यन्यस्माज्जातात्तदप्यन्यस्मादिति न व्यवस्था प्रसज्यते । अनवस्थानं स्यादित्यर्थः ॥ १३ ॥

किं च यस्य प्रधानवादिनो मते प्रधानादजादभिन्नं कार्यं जायते महदादीत्यभ्युपगम्यते । तस्य पक्षे तस्मिन्नर्थे दृष्टान्तो वक्तव्यः, तदवष्टम्भेनैव तेनार्थव्यवस्थापनात् । न चात्रोभयसंप्रतिपन्नो दृष्टान्तो दृष्टोऽस्तीत्याह—अजादिति । यद्यजान्नित्याद्वस्तुनो जायमानमभ्युपगन्तुं न शक्यते तर्हि जातादेव जायमानमभ्युपगम्यतामित्याशङ्क्याऽऽह—जाताच्चेति । सांख्यसमये दोषान्तरप्रदर्शनपरत्वं श्लोकस्य प्रतिजानीते—किं चान्यदिति । तत्र पूर्वार्धाक्षराणि योजयति—अजादिति । दृष्टान्ताभावेऽपि प्रमाणान्तरादर्थप्रतिपत्तिर्भविष्यतीत्याशङ्क्याऽऽह—दृष्टान्तेति । परस्य खल्वनुमानाधीनमर्थपरिज्ञानम् । न च दृष्टान्ताभावेऽनुमानमवकल्पते तस्मान्न सांख्यसमयः संभवतीत्यर्थः । द्वितीयार्धं व्याचष्टे—यदा पुनरित्यादिना ॥ १३ ॥

हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।
हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते ॥ १४ ॥

"यत्र त्वस्य सर्वमात्मैवाभूत्" इति परमार्थतो द्वैताभावः श्रुत्योक्तस्तमाश्रित्याऽऽह—हेतोर्धर्माधर्मादेरादिः कारणं देहादिसंघातः फलं येषां

१ घ. °णका° । २ ख. °भेदेऽपि । ३ छ. °जादुत्प° । ४ झ. °न्नान्नित्याद्व° । ५ झ. °ति प्रसि° । ६ झ. तदाऽप्य° । ७ ग. °न्तानुभा° । ८ ग. झ. °न्तानुभा° । ९ घ. ङ. ज. °कल्प्यते । १० छ. श्रुत्युक्त° । ११ क. घ. ज. °र्मादे° । १२ झ. देहसं° । १३ घ. ङ. ज. फलमेषां ।

वादिनाम् । तथाऽऽदिः कारणम् । हेतुर्धर्माधर्मादिः[1] । फलस्य च देहा[2]दिसंघातस्य । एवं हेतुफलयोरितरेतर[3]कार्यकारणत्वेनाऽऽदिमत्त्वं ब्रुवद्भिरेवं हेतोः फलस्य चानादित्वं[4] कथं तैरुपवर्ण्यते विप्रतिषिद्धमित्यर्थः । न हि नित्यस्य[5] कूटस्थस्याऽऽत्मनो हेतुफलात्मता[6] संभवति ॥ १४ ॥

द्वैतवादिभिरन्योन्यपक्षप्रतिक्षेपमुखेन(ण) ख्यापितं वस्तुनोऽजन्यत्वमद्वैतवादिनाऽभ्यनुज्ञातमिदानीं द्वैतनिरसनमपि श्रौतं विद्वदनुभवानुसारित्वात्तेना[7]भ्यनुज्ञातमेवेत्याह—हेतोरिति । हेतुफलात्मकः संसारोऽनादिरिति वदद्भिस्तस्यानादित्वस्वभावो नैव वक्तुं शक्यते । हेतुफलयोरादिमत्त्वस्य[8] कण्ठोक्तत्वादतो हेतुफलात्मकं द्वैतमनि[9]रूपितरूपमवस्तुभूतमित्यर्थः । श्लोकस्य तात्पर्य[10]माह—यत्र त्विति । तमाश्रित्य कार्यकारणात्मकस्य द्वैतस्य दुर्निरूपत्व[11]माहेति योजना । हेतुफलयोरात्मपरिणामत्वादादिमत्त्वमुपादानरूपेण चानादित्वमि[12]त्याशङ्क्याऽऽत्मनो निरंशस्य[13] कूटस्थस्य[14] नित्यस्य[15] परिणामानुपपत्तेर्मैवमित्याह—न हीति ॥ १४ ॥

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।**
**तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥ १५ ॥**

कथं तैर्विरुद्धमभ्युपगम्यत[16] इति । उच्यते । हेतुजन्यादेव फलाद्धेतोर्जन्माभ्युपगच्छतां[17] तेषामीदृशो विरोध उक्तो भवति यथा पुत्राज्जन्म पितुः ॥ १५ ॥

हेतुफलयोरन्योन्यमादिमत्त्वं ब्रुवता तदात्मकस्य संसारस्यानादित्वं विप्रतिषिद्धमित्युपपादितम् । संप्रति कार्यकारणभावोऽपि तयोर्न संभवतीत्याह—हेतोरित्यादिना । हेतुफलयोरन्योन्यं कारणत्वमभ्युपगच्छद्भिरभ्युपगम्यते विरुद्धमित्येतत्प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना । ईदृशत्वमेव विशदयति—यथेति ॥ १५ ॥

**संभवे हेतुफलयोरेषितव्यः क्रमस्त्वया ।**
**युगपत्संभवे यस्मादसंबन्धो विषाणवत् ॥ १६ ॥**

यथोक्तो विरोधो न युक्तोऽभ्युपग[18]न्तुमिति चेन्मन्यसे संभवे हेतुफ-

---

१ क. झ. °र्मादिः° । २ झ. देहसं° । ३ क. °तरका° । ४ च. झ. °नादिः क° । ५ ख. घ. ङ. ज. °त्यकू° । ६ क छ. °त्मकता । ७ क. °रि चैतेना° । ख. ज. °रि च तेना° । ग. °रिवादिना° । ८ ग. झ. °स्य त्वयैवोक्त° । ९ घ. °मनुरू° । १० छ. ज. °त्पर्यार्थमा° । ११ छ. °रूपितत्वमा° । १२ घ. °दिमत्त्वमि° । १३ ग. झ. °स्य प° । १४ छ. °स्थनि° । १५ ख. ज. घ. ङ. °स्य स्वतः प° । १६ छ. °म्यते । हे° । १७ झ. °च्छतामी° । १८ झ. °मन्तुं चे° ।

लयोरुत्पत्तौ क्रम एषितव्यस्त्वयाऽन्वेष्टव्यो हेतुः पूर्वं पश्चात्फलं चेति। इतश्च युगपत्संभवे यस्माद्धेतुफलयोः कार्यकारणत्वेनासंबन्धः। यथा युगपत्संभवतोः सव्येतरगोविषाणयोः ॥ १६ ॥

प्रतीतितो हेतुफलयोरुत्पत्तेरुपगन्तव्यत्वान्न युक्तं तन्निराकरणमित्याशङ्क्याऽऽह—संभव इति। तयोरुदये प्रातीतिके नियतपूर्वभावी हेतुर्नियतोत्तरभावि फलमित्यभ्युपगमे हेतुमाह—युगपदिति। यथोक्तो विरोधो हेतुफलभावस्यासंभवः स न युक्तोऽभ्युपगन्तुं प्रतीतिविरोधादिति व्यावर्त्यां शङ्कामनुवदति—यथेति। तत्रोत्तरत्वेन श्लोकाक्षराणि योजयति—संभव इति। प्रतीत्या क्रमस्वीकारवदुपपत्तेश्चेत्याह—इतश्चेति। तामेवोपपत्तिं स्फोरयति—युगपदिति। ययोर्युगपत्संभवस्तयोर्न कार्यकारणत्वं यथा विषाणयोरिति व्याप्तेर्व्यक्तत्वात्क्रमस्याऽऽवश्यकतेत्यर्थः ॥ १६ ॥

**फलादुत्पद्यमानः सन्न ते हेतुः प्रसिध्यति।**
**अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति ॥ १७ ॥**

कथमसंबन्ध इत्याह—जन्यात्स्वतोऽलब्धात्मकात्फलादुत्पद्यमानः सञ्शशविषाणादेरिवासतो न हेतुः प्रसिध्यति जन्म न लभते। अलब्धात्मकोऽप्रसिद्धः सञ्शशविषाणादिकल्पस्तत्र कथं फलमुत्पादयिष्यति। न हीतरेतरापेक्षसिद्ध्योः शशविषाणकल्पयोः कार्यकारणभावेन संबन्धः क्वचिद्दृष्टः, अन्यथा वेत्यभिप्रायः ॥ १७ ॥

उक्तव्याप्तेरनुग्राहकं तर्कमुपन्यस्यति—फलादिति। हेतुफलयोर्मिथो हेतुफलत्वं ब्रुवतो मते हेत्वधीनतयाऽलब्धात्मकात्फलादुत्पद्यमानो हेतुर्न ततो लब्धात्मको भवत्यलब्धात्मकश्चासत्त्वान्न फलमुत्पादयितुं शक्नोति। अतो हेतुफलभावस्यैवासिद्धिरित्यर्थः। हेतुफलयोरक्रमवतोर्न कार्यकारणभावेन संबन्धः सिध्यतीत्येतदाकाङ्क्षापूर्वकं साधयति—कथमित्यादिना। स्वतो हेतुस्वरूपाज्जन्यं फलं तदधीनत्वेन लब्धात्मकं स्वतश्चालब्धात्मकम्। तत उत्पद्यमानः सन्नेष हेतुर्न प्रसिध्यति। न खलु शशविषाणादेरसतः सकाशात्किंचिल्लब्धात्मकमुपलभ्यते। हेतुश्चेदप्रसिद्धोऽलब्धात्मकोऽभ्युपगतः स तर्हि यथाविधोऽसद्रूपः सन्न फलमुत्पादयितुमुत्सहते। न हि सद्वादिमते फलमसतः सकाशादुपलब्धचरमित्यर्थः। तथाऽपि कथं हेतुफलयोरसंबन्धः सिध्यतीत्याश-

---

१ क. सन्युक्तोऽ°। २ ग. छ. झ. °वर्त्यामाश°। ३ घ. °तो हे°। ४ क. °तुः सि°। घ. °तुः फलं प्र°। ५ च. °कोऽसि°। ६ च. °दिष्कि°। ७ च. °था चेत्य°। ८ क. घ. ज. °ना। हे°।

ङ्क्याऽऽह[1]—न हीति। अन्यथा वेत्याधाराधेय[2]भावादिकथनं हेतुफलयोर्यौगपद्ये सत्य-न्यतरस्यापि न पूर्वक्षणे सत्त्वि[3]त्यमतोः शशविषाणयोरिवान्योन्यापेक्षया जन्यजनकत्वं नोपपद्यते शशविषाणादिष्वपि प्रसङ्गादित्युक्तम् ॥ १७ ॥

यदि हेतोः फला[4]त्सिद्धिः फलसिद्धिश्च हेतुतः।
कतरत्पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया ॥ १८ ॥

असंब[5]न्धतादोषे[6]णा[7]पोदितेऽपि हेतुफलयोः कार्यकारणभावे यदि हेतुफलयोरन्योन्यसिद्धिरभ्युपगम्यत एव त्वया कतरत्[8]पूर्वनिष्पन्नं हेतुफलयोर्यस्य पश्चाद्भाविनः सिद्धिः स्यात्पूर्वसिद्ध्यपेक्षया तद्ब्रूही-त्यर्थः ॥ १८ ॥

इदानीं पुण्यो वै पुण्येन कर्मणा भवतीत्यादिश्रुतेर्धर्मादिषु हेतुफलभावमाशङ्क्य श्रुते-रसंभावितार्थे प्रामाण्यायोगादवश्यं पौर्वापर्यं वक्तव्यमित्याह—यदीति। श्लोकाक्षराणि योजयति—असंबन्धेत्यादिना ॥ १८ ॥

अशक्तिरपरिज्ञानं क्रमकोपोऽथ वा पुनः।
एवं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥ १९ ॥

अथैतन्न शक्यते वक्तुमिति मन्य[9]से सेयमशक्तिरपरिज्ञानं तत्त्वा-विवेको मूढतेत्यर्थः। अथ वा योऽयं त्वयोक्तः क्रमो हेतोः फलस्य सिद्धिः फलाच्च हेतोः सिद्धिरितीतरेतरानन्तर्यलक्षणस्तस्य कोपो विप-र्यासोऽन्यथाभावः स्यादित्यभिप्रायः। एवं हेतुफलयोः कार्यकारण-भावानुपपत्तेरजातिः सर्वस्यानुत्पत्तिः परिदीपिता प्रकाशिताऽन्यो[10]न्यप-क्षदोषं ब्रुवद्भिर्वादिभिर्बुद्धैः पण्डितैरित्यर्थः ॥ १९ ॥

हेतुफलयोरिदं पूर्वमिदं पश्चादिति न ज्ञायते। परस्पराश्रयात्। अतश्चेदं पूर्वनि[11]-ष्पन्नमिति वक्तुमशक्यमित्याह—अशक्तिरिति। उत्तरावसरे चेदु[12]त्तरापरिज्ञानं तर्हि कथ[13]मशक्तिसूचकं तन्निग्रहस्थानमप्रतिभाभिधानीयमापततीत्यर्थः। किं च यदि क्रमस्य नियतपूर्वापर[14]भावात्मनोऽपरिज्ञानं तदा पूर्वं कारणमुत्तरं कार्यमिति प्रतिज्ञा ही[15]येत। तथा च प्रतिज्ञाहानिर्निग्रहान्तरमापद्येतेत्याह—क्रमेति। अन्योन्यपक्षप्र[16]तिक्षेपमुखेन(ण)

१ ख. °ह। अ°। २ ग. झ. °धेयाभा°। ३ ग. झ. सत्त्वमित्य°। ४ च. झ. °लासिद्धिः। ५ झ. °बद्धता°। ६ घ. °षे मयोदि°। ७ च. °णाऽऽपादि°। ८ ख घ. °त्पूर्वे नि°। ९ घ. ज. °न्यस इय°। १० क. छ. °न्योन्यापेक्ष°। ११ ख. ङ. झ. पूर्वे नि°। १२ ग. ङ. झ. चेत्तदु°। १३ झ. °थकाश°। १४ ग. झ. °परीभा°। १५ घ. ज. हीयते। १६ ग. °तिपक्षमु°।

सतोऽसतश्च जन्मनी प्रत्याख्याते । क्रमाक्रमाभ्यामुत्पत्ते[1]रनुपपत्ते[2]र्जातिरेवास्मदभिप्रेता वादिभिरादर्शिता भवतीत्युपसंहरति—एवं[3] हीति । तत्राऽऽद्यं पादं व्याकरोति—अथेत्यादिना । क्रमपक्षे पूर्वनिष्पन्नमेतच्छब्देन परामृश्यते । द्वितीयपादं योजयति—अथ वेत्यादिना । द्वितीयार्धं विवृणोति—एवमिति॥ १९ ॥

**बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः ।**
**न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते ॥२०॥**

ननु हेतुफलयोः कार्यकारणभाव इत्यस्माभिरुक्तं शब्दमात्रमाश्रित्य च्छलमिदं त्वयोक्तं पुत्राज्जन्म पितुर्यथा विषाणवच्चासंबन्ध इत्यादि । न ह्यस्माभिरसिद्धाद्धेतोः फलसिद्धिरसिद्धाद्वा फलाद्धेतुसिद्धिरभ्युपगता । किं तर्हि । बीजाङ्कुरवत्कार्यका[4]रणभावोऽभ्युपगम्यत इति । अत्रोच्यते—बीजाङ्कुराख्यो दृष्टान्तो यः स[6] साध्येन[7] तुल्यो ममेत्यभिप्रायः । ननु प्रत्यक्षः[8] कार्यकारणभावो बीजाङ्कुरयोरनादि[9]र्न पूर्वस्य पूर्वस्या[10]परस्य[11]वदादिमत्त्वाभ्युपगमात् । यथेदानीमुत्पन्नोऽपरोऽङ्कुरो बीजादादिमान्बीजं चापरमन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत् । एवं पूर्वः[12] पूर्वोऽङ्कुरो[13] बीजं च पूर्वं पूर्वमादिमदेवेति प्रत्येकं सर्वस्य बीजाङ्कुरजातस्या[14]ऽऽदिमत्त्वात्कस्यचिदप्यना[15]दित्वानुपपत्तिः । एवं हेतुफलानाम् । अथ बीजाङ्कुरसंततेरनादिमत्त्वमिति चेत् । न । एकत्वानुपपत्तेः । न हि बीजाङ्कुरव्यतिरेकेण बीजाङ्कुरसंततिर्[16]नामैकाऽभ्युपगम्यते हेतुफलसंततिर्वा तदनादित्ववादिभिः । तस्मा[17]त्सूक्तं हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यत इति । तथा चान्यदप्यनुपपत्तेर्न च्छलमित्यभिप्रायः । न च[18] लोके साध्यसमो हेतुः[19] साध्यसिद्धौ[20] सिद्धिनिमित्तं प्रयुज्यते प्रमाणकुशलैरित्यर्थः । हेतुरिति दृष्टान्तोऽत्राभिप्रेतो गमकत्वात् । प्रकृतो हि दृष्टान्तो न हेतुरिति ॥ २० ॥

बीजाङ्कुरयोरिव हेतुफलयोरन्योन्यं कार्यकारणभावाभ्युपगमान्नान्योन्याश्रयत्वमि-

---

१ छ. °नुत्पत्तेरतोऽजा° । २ ग. झ. °रतोऽजा° । ३ ग. झ. °वं तर्हीति । ४ च. नः । ५ फ. °रणाभा° । ६ च. स साध्यसमः सा° । ७ झ. °न समस्तुल्यो । ८ च °त्यक्षं का° । ९ च. घ. °दिर्नापू° । १० च. °स्याऽऽदि° । ११ क. °रवादि° । १२ क. झ. पूर्वे पू° । १३ च. पूर्वाङ्कु° । १४ च. झ. °तस्य चाऽऽदि° । १५ छ. °दिमत्त्वानु° । १६ °संमति° । १७ च. झ. °स्मात्सुष्ठूक्तं । १८ घ. च सा° । १९ च. हेतोरि° । २० घ. °ति च ह° ।

त्याशङ्क्याऽऽह—बीजेति । दृष्टान्तस्य साध्यसमत्वेऽपि साधकत्वमस्त्वित्याशङ्क्याऽऽह—न हीति । श्लोकापोद्यं[2] चोद्यमुद्भावयति—नन्विति । शब्दमात्रं विवक्षितार्थशून्यम् । शब्दमाश्रित्य च्छलप्रयोगमेवोदाहरति—पुत्रादिति । आदिशब्देन फलादुत्पद्यमानः[3] सन्न ते हेतुः प्रसिध्यतीत्यादि गृह्यते । कार्यकारणभावो हेतुफलयोरित्यत्रानभिप्रेतमर्थं कथयति—न हीति । तत्रैव[4] प्रश्नपूर्वकमभिप्रेतमर्थमुदाहरति—किं तर्हीति । दृष्टान्तासंप्रतिपत्त्या परिहरति—अत्रेति । मायावादिमते क्वचिदपि कार्यकारणभावस्य वस्तुभूतस्यासंप्रतिपत्तेर्ममेत्युक्तम्[5] । प्रत्यक्षावष्टम्भेन दृष्टान्तं साधयन्नाशङ्कते—नन्विति । किं बीजाङ्कुरव्यक्त्योरिदं कार्यकारणत्वमिष्यते किं[6] वा बीजाङ्कुरसंतानयोरिति विकल्प्याऽऽद्यं दूषयति—न पूर्वस्येति । तदेव प्रपञ्चयति—यथेत्यादिना । बीजव्यक्तेरङ्कुरव्यक्तेश्चोक्तप्रकारेणानादित्वस्यान्योन्यकारणत्वस्य[7] चानुपपत्तिरिति शेषः[8] । कल्पान्तरमुत्थापयति—अथेति । बीजसंततेरङ्कुरसंततेश्चानादित्वमन्योन्यं[9]कारणत्वं[10] चाविरुद्धं सिध्यति । बीजजातीयादङ्कुरजातीयम[11]ङ्कुरजातीयाद्बीजजातीयमुत्पद्यमानमुपलभ्यते । तथैव[12] हेतुजातीयात्फलजातीयं फलजातीयाच्च हेतुजातीयमविरुद्धमित्यर्थः । दृष्टान्ते दार्ष्टान्तिके[13] च संततेरेकस्या व्यक्ते[14]र्व्यतिरेकेणासंभवान्नैवमिति[15] दूषयति—नेत्यादिना । तदेव प्रपञ्चयति—न हीति । तदनादित्ववादिभिस्तासु व्यक्तिषु मिथो हेतुत्वमनादित्वं तद्दर्शनशीलै[16]रिति यावत् । अन्योन्याश्रयत्वादनवस्थानाद्वा हेतुफलयोर्मिथो हेतुफलभावस्य वक्तुमशक्यत्वाद्दृष्टान्तदार्ष्टान्तिकयोरनुपपत्तिः सिद्धेत्युपसंहरति—तस्मादिति । दृष्टान्तस्यासंप्रतिपन्नत्वे स्थिते कार्यकारणत्वस्य[17] क्वचिदपि संप्रतिपत्त्यभावात्पुत्राज्जन्म पितुर्यथेत्यादि न च्छलप्रयुक्तमिति फलितमाह—तथा चेति । एवं श्लोकस्य पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे—न चेति । किमिति हेतुशब्दस्य मुख्यमर्थं[18] त्यक्त्वा गौणोऽर्थो गृह्यते[19], प्रकरणसामर्थ्यादित्याह—प्रकृतो हीति । हेतुफलभावानुपपत्तिमुपपादितामुपसंहर्तुमितिशब्दः ॥ २० ॥

**पूर्वापरापरिज्ञान[20]मजातेः परिदीपकम् ।**
**जायमानाद्धि[21] वै[22] धर्मात्कथं पूर्वं न गृह्यते ॥ २१ ॥**

---

१ छ. °कम° । २ ख. °पोद्यं चो° । ३ ग. °मानो हे° । ४ ग. झ. तत्रैवं । ५ ग. झ. °पत्तिर्मे° । ६ घ. किं वी° । ७ झ. °त्वस्याप्यनु° । ८ ख. छ. °षः । विक° । ९ ग. झ. °दिमत्त्वम° । १० ग. झ. °न्यकार्यका° । ११ ग. झ. °णत्वं वा वि° । १२ ग. झ. °यमु° । १३ ख. °के सं° । १४ ग. ज. झ. व्यक्तिव्यति° । १५ घ. ङ. °क्तेर्व्यक्तिव्यति° । १६ क. दनुशी° । १७ क. ख. छ. °णत्वस्य । १८ छ. मुख्यार्थं । १९ ज. °ते क° । २० घ. °परप° । २१ ख. घ. ङ. ज. °द्धि चेद्धर्मा° । २२ छ. वै कार्यात्क° ।

कथं बुद्धैरजातिः परिदीपितेत्याह—यदेतद्धेतुफलयोः पूर्वापरापरिज्ञानं तदेतदजातेः परिदीपकमवबोधकमित्यर्थः । जायमानो हि च धर्मो गृह्यते, कथं तस्मात्पूर्वं कारणं न गृह्यते । अवश्यं हि जायमानस्य ग्रहीत्रा तज्जनकं ग्रहीतव्यम् । जन्यजनकयोः संबन्धस्यानपेतत्वात् । तस्मादजातिपरिदीपकं तदित्यर्थः ॥ २१ ॥

यत्पुनरन्योन्यपक्षं प्रतिक्षिपद्भिरजातिर्वस्तुतो ज्ञापिता परीक्षकैरित्युपक्षिप्तं तत्र कथमजातिर्वस्तुतो ज्ञापितेत्याशङ्क्याऽऽह—पूर्वापरेति । कार्यस्य गृह्यमाणत्वादजातिरसिद्धेत्याशङ्क्य कारणस्यापि तर्हि ग्राह्यत्वादितरेतराश्रयादजातिरेतिव्यक्ता सिध्यतीत्याह—जायमानादिति । तत्र पूर्वार्धं प्रश्नद्वारा विवृणोति—कथमित्यादिना । नियते पौर्वापर्ये निर्धारिते जातिः सिध्यति । तदभावे तदसिद्धिरित्यर्थः । द्वितीयार्धं विभजते—जायमानो हीति । कार्यग्रहणे कारणं ग्रहीतव्यमिति कुतो नियम्यते तत्राऽऽह—अवश्यं हीति । कार्यकारणयोर्नियतसंबन्धवतोरितरेतराश्रयाद्दुर्ग्रहत्वादजातिरेव वस्तुतो ज्ञापितेत्युपसंहरति—तस्मादिति । कार्यकारणयोर्दुर्ज्ञानत्वं तच्छब्देन परामृश्यते ॥ २१ ॥

**स्वतो वा परतो वाऽपि न किंचिद्वस्तु जायते ।**
**सदसत्सदसद्वाऽपि न किंचिद्वस्तु जायते ॥ २२ ॥**

इतश्च न जायते किंचित् । यज्जायमानं वस्तु स्वतः परत उभयतो वा सदसत्सदसद्वा न जायते न तस्य केनचिदपि प्रकारेण जन्म संभवति । न तावत्स्वयमेवापरिनिष्पन्नात्स्वतः स्वरूपात्स्वयमेव जायते यथा घटस्तस्मादेव घटात् । नापि परतोऽन्यस्मादन्यो यथा घटात्पटः पटात्पटान्तरम् । तथा नोभयतः । विरोधात् । यथा घटपटाभ्यां घटः पटो वा न जायते । ननु मृदो घटो जायते पितुश्च पुत्रः । सत्यम् । अस्ति जायत इति प्रत्ययः शब्दश्च मूढानाम् । तावेव शब्दप्रत्ययौ विवेकिभिः परीक्ष्येते किं सत्यमेव तावुत मृषेति यावता परीक्ष्यमाणे । शब्दप्रत्ययविषयं वस्तु घटपुत्रादिलक्षणं शब्दमात्रमेव तत् । "वाचारम्भ-

---

१ झ. बुधैर° । २ छ. °दीपिक° । ३ ख. घ. च. ङ. ज. हि चेद्धर्मो । झ. हि वै ध° । ४ ख. घ. ङ. ज. °रभिव्य° । ५ ग. °यतपौ° । ६ ग. झ. ध्यतीति । ७ ग. झ. °वेन त° । ८ ग. झ. °णदुर्ज्ञा° । ९ झ. च्छलेन । १० घ. यतो यज्जा । ११ ज. °ष्पन्नत्वात्स्वतः स्व° । १२ क. छ. °त्स्वरू° । १३ क. च. छ. वा जा° । १४ ज. °टो पि° । १५ घ. °माणं श° ।

णम्" इति श्रुतेः । सच्चेन्न जायते सत्त्वात्मृत्पिण्डादिवत्[1] । यद्यसत्तथाऽपि न जायतेऽसत्त्वादेव[2] शशविषाणादिवत्[3] । अथ सदसत्तथाऽपि[4] न जायते विरुद्धस्यैकस्यासंभवात् । अतो न किंचिद्वस्तु जायत इति सिद्धम् । येषां पुनर्जनिरेव जायत इति क्रियाकारकफलैकत्वमभ्युपगम्यते क्षणिकत्वं च वस्तुनः, ते दूरत एव न्यायापेताः । इदमित्थमित्यवधारण[6]क्षणान्तरानवस्थानादननुभूतस्य स्मृत्यनुपपत्तेश्च ॥ २२ ॥

वस्तुनो वस्तुनो जन्म नास्तीति विकल्पपूर्वकं साधयति—स्वतो वेत्यादिना । कस्यचिदपि वस्तुनो[10] जन्म नास्तीत्यस्मिन्नर्थे हेत्वन्तरपरत्वं श्लोकस्य दर्शयति—इतश्चेति । इतःशब्दार्थमेव स्फोरयितुं जायमानमनूद्य षोढा विकल्पयति—यज्जायमानमिति । सर्वेष्वपि पक्षेषु दोषसंभावनं सूचयति—न तस्येति । तत्राऽऽद्यं दूषयति—न तावदिति । स्वयमेव जायमानं कार्यं स्वस्मादेव स्वरूपान्न तावज्जायते स्वयमेव स्वापेक्षामन्तरेण स्वकारणाधीनतया परिनिष्पन्नत्वात् । अन्यथा स्वसिद्धेः स्वसिद्धिरित्यात्माश्रयात् । न हि घटादेव घटो जायमानो दृष्टोऽस्तीत्यर्थः । द्वितीयं प्रत्याह—नापीति । न खल्वन्यत्वं जनकत्वे प्रयोजकम् । घटादपि[11] पटोत्पत्तिप्रसङ्गात् । न चोत्पादकत्वयोग्यत्वविशेषितमन्यत्वं तथेति वाच्यम् । उत्पत्तिमन्तरेण तद्योग्यत्वस्य दुरवगमत्वादित्यर्थः । तृतीयं निरस्यति—तथेति । विरोधमेव दृष्टान्तद्वारा स्पष्टयति—यथेति । न हि घटपटाभ्यां घटः पटो वा जायमानो दृश्यते । तथा जायमानं स्वस्मादन्यस्माच्च भवतीत्यनुपपन्नमित्यर्थः[12] । अन्यत्वे सत्यपि जन्यजनकभावस्य प्रत्यक्षत्वान्नासौ शक्यते प्रतिक्षेप्तुमिति शङ्कते—नन्विति । किं प्रत्यक्षानुसारिणौ शब्दप्रत्ययावविवेकिनामिष्येते[13] किं वा विवेकिनामिति विकल्प्याऽऽद्यमङ्गी करोति—सत्यमिति । द्वितीयं प्रत्याह—तावेवेति । मृषैवेति परीक्ष्यमाणे सतीति संबन्धः । तच्च[14] जन्मशब्दधीविषयं वस्तु शब्दमात्रमेव वाचारम्भणश्रवणान्न परमार्थतो यावता विद्यते, तस्मादसत्यालम्बनत्वमेव शब्दप्रत्यययोरिष्टव्यमिति योजना । चतुर्थं शिथिलयति—सच्चेदिति । पञ्चमं निराकरोति—यदीति । षष्ठं प्रत्यादिशति—अथेत्यादिना । षण्णा[15] विकल्पाना[16] निरासे फलितं[17] निगमयति—अतो नेति । क्रिया-

---

१ क. ख. घ. ज. °त्पिण्डादि° । २ क. ख. ख. °ते विद्यतेऽसि° । ३ क. छ. झ. °षाणव° । ४ च. °पि जा° । ५ च. स्तुतस्ते दू । ६ ख. °मित्य° । ७ च. °रणा । ८ ज. °णलक्ष° ९ ग. झ. °स्तुतोऽव° । १० ङ. छ. ञ. नो वस्तुनो ज° । ११ क. ज. पि घटो । १२ °पत्ति-रित्य° । १३ च. छ. ज. झ. °मिष्यते । १४ ग. झ. तन्न । १५ ज. विचारणा । १६ झ. °ना फ° । १७ घ. ङ. ज. °तं ग° ।

कारकफलनानात्वपक्षे जन्मानुपपत्तिदोषमुक्त्वा पक्षान्तरमनूद्य दूषयति—**येषां पुनरिति** । बौद्धानां न्यायावष्टम्भेन वस्तु व्यवस्थापयतां कुतो न्यायवाह्यत्वमित्याशङ्क्याऽऽह—**इदमिति** । इदमा वस्तु परामृष्टम् । इत्थमिति क्षणिकत्वं विवक्षितम् । एवैमवधारणावच्छिन्ने क्षणे वस्त्ववच्छेदकक्षणातिरिक्ते वस्तुनोऽवस्थानाभावान्न तस्मिन्ननुभवः सिध्यतीत्यर्थः । न च तस्मिन्ननुभूतेऽर्थे स्मृतिरुत्पद्यते । तथा च वस्तुनि प्रत्ययद्वयासिद्धौ व्यवहारासिद्धिरित्याह—**अननुभूतस्येति** ॥ २२ ॥

**हेतुर्न जायतेऽनादेः फलं चापि स्वभावतः ।**
**आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥ २३ ॥**

**किं च हेतुफलयोरनादित्वमभ्युपगच्छता त्वया बलाद्धेतुफलयोरजन्मैवाभ्युपगतं स्यात् । तत्कथम्, अनादेरादिरहितात्फलाद्धेतुर्न जायते । न ह्यनुत्पन्नार्दनादेः फलाद्धेतोर्जन्मेष्यते त्वया । फलं चाऽऽदिरहितादनादेर्हेतोरजात्स्वभावत एव निर्निमित्तं जायत इति नाभ्युपगम्यते । तस्मादनादित्वमभ्युपगच्छता त्वया हेतुफलयोरजन्मैवाभ्युपगम्यते । यस्मादादिः कारणं न विद्यते यस्य लोके तस्य ह्यादिः पूर्वोक्ता जातिर्न विद्यते । कारणवत एव ह्यादिरभ्युपगम्यते नाकारणवतः ॥ २३ ॥**

वस्तुनो वस्तुतो जन्मराहित्ये हेत्वन्तरमाह—**हेतुर्नेति** । नानादेः फलाद्धेतुर्जायते । न हि फलस्यानादित्वे ततो हेतुजन्म युक्तं सदा तज्जन्मप्रसङ्गादित्यर्थः । फलमपि न हेतोरनादेर्जायते दोषसाम्यादित्याह—**फलं चेति** । नापि स्वभावतो निमित्तमन्तरेण फलं हेतुर्वा जायते । तत्र हेतुमाह—**आदिरिति** । कारणरहितस्य जन्मानुपलब्धेरित्यर्थः । वस्तुनो वस्तुतो जन्माभावे हेत्वन्तरपरत्वं श्लोकस्य सूचयति—**किं चेति** । हेत्वन्तरमेव दर्शयितुं प्रथमं प्रतिज्ञां करोति—**हेत्विति** । फलाद्धेतुर्जायते ततश्च फलमित्यभ्युपगमात्कथमजन्माभ्युपगतमिति पृच्छति—**कथमिति** । तत्राऽऽद्यपादाक्षरयोजनया परिहरति—**अनादेरिति** । तदेवोपपादयति—**न हीति** । फलं कार्यकारणसंघातः । हेतुर्धर्मादिः । फलं चापीति भागं विभजते—**फलं चेति** । अजाज्जायत इति नाभ्युपगम्यत इति संबन्धः । स्वभावत इति पदं योजयति—**स्वभावत एवेति** । फलितं निगमयति—**तस्मादिति** । न हेतुफलयोर्जन्मवतोरनादित्वमभ्युप-

१ ख. °क्षे अज° । छ. °क्षेऽजस्याज° । २ ग. झ. °पत्तिं दो° । ३ ग. °वमेव । ४ छ. °वाप्नानु° । ५ क. घ. छ ज. °न्नन्° । ६ च. चाऽपि । ७ झ. °दिमत्वम° । ८ झ. °दजादना° । ९ झ. तस्याऽऽदिः । १० ग. झ. °न्तरं सू° । ११ ङ. झ. °र्यकर° ।

गन्तुं शक्यम् । अभ्युपगमे च जन्मैव तयोराकस्मिकं स्यादित्यर्थः । स्वभाववादनिराकरणं प्रतिज्ञातमुत्तरार्धावष्टम्भेन प्रतिपादयति—यस्मादिति ॥ २३ ॥

**प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः ।**
**संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता ॥ २४ ॥**

उक्तस्यैवार्थस्य दृढीकरणचिकीर्षया पुनराक्षिपति—प्रज्ञानं प्रज्ञप्तिः शब्दादिप्रतीतिस्तस्याः सनिमित्तत्वम् । निमित्तं कारणं विषय इत्येतत्सनिमित्तत्वं सविषयत्वं स्वात्मव्यतिरिक्तविषयतेत्येतत्प्रतिजानीमहे । न हि निर्विषया प्रज्ञप्तिः शब्दादिप्रतीतिः स्यात् । तस्याः सनिमित्तत्वात् । अन्यथा निर्विषयत्वे शब्दस्पर्शनीलपीतलोहितादिप्रत्ययवैचित्र्यस्य द्वयस्य नाशतो नाशोऽभावः प्रसज्येतेत्यर्थः । न च प्रत्ययवैचित्र्यस्य द्वयस्याभावोऽस्ति प्रत्यक्षत्वात् । अतः प्रत्ययवैचित्र्यस्य द्वयस्य दर्शनात् । परेषां तन्त्रं परतन्त्रमित्यन्यशास्त्रं तस्य परतन्त्रस्य परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता मताऽभिप्रेता । न हि प्रज्ञप्तेः प्रकाशमात्रस्वरूपाया नीलपीतादिबाह्यालम्बनवैचित्र्यमन्तरेण स्वभावभेदेनैव वैचित्र्यं संभवति । स्फटिकस्येव नीलाद्युपाध्याश्रयैर्विना वैचित्र्यं न घटत इत्यभिप्रायः । इतश्च परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता । संक्लेशनं संक्लेशो दुःखमित्यर्थः । उपलभ्यते ह्यग्निदाहादिनिमित्तं दुःखं यद्यग्न्यादिबाह्यं दाहादिनिमित्तं विज्ञानव्यतिरिक्तं न स्यात्ततो दाहादिदुःखं नोपलभ्येत । उपलभ्यते तु, अतस्तेन मन्यामहेऽस्ति बाह्योऽर्थ इति । न हि विज्ञानमात्रे संक्लेशो युक्तः । अन्यत्रादर्शनादित्यभिप्रायः ॥ २४ ॥

वस्तुनो वस्तुतो जन्मायोगादजं विज्ञानमात्रं तत्त्वमित्युक्तम् । इदानीं बाह्यार्थवादमुत्थापयति—**प्रज्ञप्तेरिति** । ज्ञानस्यं निर्विषयत्वे प्रत्ययवैचित्र्यानुपपत्तिं प्रमाणयति—**अन्यथेति** । अग्निदाहादिप्रयुक्तदुःखोपलब्ध्यनुपपत्तेश्चास्ति बाह्योऽर्थ इत्याह—**संक्लेशस्येति** । परतन्त्रं परकीयं शास्त्रं तस्यास्तिता तद्विषयस्य बाह्यार्थस्य विद्यमानतेति

---

१ ङ. ज. झ. °मे त्वज° । २ क. ग. झ. °वादिनि° । ३ घ. °मितका° । ४ क. °त्तं कर° । ५ क. °तस्य नि° । ६ च. °षयं तदेत° । ७ च. झ. °प्तिः स्यात्सनि° । ८ क. °त्र्यद्व° । ९ झ. °न्यथाशा° । १० क. °तन्त्रा° । ११ झ °प्तेः स्वप्र° । १२ च. झ. °नैतद्वैचि° । १३ छ. नीलपीताद्यु° । १४ च. °चित्र्यमित्य° । १५ च. °र्थस्या° । १६ च. °बाह्यदा° । १७ क. दारादि । १८ झ. °मित्तवि° । १९ ज. °लभ्यते । उ° । २० ग. °नस्यासविष° । २१ ख. क. °स्य सविष° । २२ ग. झ. °ह्यार्थश्चीरित्या° । २३ ख. °कीयशा° ।

यावत् । श्लोकस्य तात्पर्यमाह—उक्तस्यैवेति । वस्तुनो नास्ति वस्तुतो जन्मेत्युक्तार्थस्तस्यैव दृढीकरणं पूर्वोत्तरपक्षाभ्यां चिकीर्ष्यते तया पुनराक्षेपमुखेन(ण) बाह्यार्थवादिनां प्रस्थानमुत्थापयतीत्यर्थः । ब्रह्मस्वरूपभूतां[1] प्रज्ञप्तिं प्रतिषेधति—शब्दादीति[2] । साकारवादं व्युदस्यति—स्वात्मेति । प्रज्ञप्तेर्विषयनिरपेक्षत्वान्न स्वातिरिक्तविषयतेत्याशङ्क्याऽऽह—न हीति । सनिमित्तत्वं सविषयत्वेन स्फुरणम् । तमेव हेतुं द्वितीपादयोजनया विशदयति—अन्यथेति । प्रसङ्गस्येष्टत्वं प्रत्याचष्टे—न चेति । प्रत्ययवैचित्र्यानुपपत्तिप्रयुक्तं फलं चतुर्थपादव्याख्यानेन कथयति—अत इति । ननु प्रज्ञप्तेः स्वभावभेदेनैव बाह्यालम्बनं[3] वैचित्र्यमन्तरेण स्वगतं वैचित्र्यं घटिष्यते तत्राऽऽह—न हीति । औपाधिकं तर्हि प्रत्ययवैचित्र्यमित्याशङ्क्य बाह्यार्थातिरिक्तोपाध्यनधिगमान्मैवमित्याह—स्फटिकस्येति । तृतीयपादं हेत्वन्तरपरत्वेनावतारयति—इतश्चेति । तस्योपलब्धिमुपपादयति—उपलभ्यते हीति । तदुपलम्भेऽपि कुतो[4] बाह्यार्थसिद्धिरित्याशङ्क्याऽऽह—यदीति । उपलब्धिरेव तर्हि दुःखस्य मा भूदिति चेन्न । स्वानुभवविरोधादित्याह—उपलभ्यते त्विति । विशिष्टदुःखोपलब्ध्यनुपपत्तिसिद्धं[5] फलमाह—अत इति । विज्ञानातिरिक्तबाह्यार्थाभावेऽपि क्लेशोपलब्धिरविरुद्धेत्याशङ्क्याऽऽह—न हीति । अन्यत्र दाहच्छेदादिव्यतिरिक्ते चन्दनपङ्कलेपादाविति यावत् ॥ २४ ॥

**प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात् ।**
**निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात् ॥ २५ ॥**

अत्रोच्यते—बाढमेवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसंक्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया । स्थिरी भव तावत्त्वं युक्तिदर्शनं[7] वस्तुनस्तथात्वाभ्युपगमे कारणमित्यत्र । ब्रूहि किं तत इति[8] । उच्यते । निमित्तस्य प्रज्ञप्त्यालम्बनाभिमि(म)तस्य तव घटादेरनिमित्तत्वमनालम्बनत्वं वैचित्र्याहेतुत्वमिष्यतेऽस्माभिः, कथं, भूतदर्शनात्परमार्थदर्शनादित्येतत् । न हि घटो यथाभूतमृद्रूपदर्शने[9] सति तद्व्यतिरेकेणास्ति । यथाऽश्वान्महिषः, पटो वा तन्तुव्यतिरेकेण[10] । तन्तवश्चांशुव्यतिरेकेणेत्येवमुत्तरोत्तरभूतदर्शन[11][12] आ[13] शब्दप्रत्ययनिरोधान्नैव निमित्तमुपलभामह इत्यर्थः । अथ वा भूतदर्शनाद्बाह्यार्थस्यानिमित्तत्वमिष्यते । रज्ज्वादाविव सर्पादेरित्यर्थः ।

---

१ घ. °ह्मरू° । २ ग. ज. झ. °ति । स्वाका° । ३ क. छ. °म्बनवै° । ४ क. कुता । ५ छ. °वसिद्धत्ववि° । ६ ग. °लब्धानु° । ७ च. °क्तिर्दर्श° । ८ झ. °ति । अत्रोच्य° । ९ क. °ज्ञत्वाल° । १० झ. °केणेति । त° । ११ ख. ङ. च. छ. °न्तवो वांऽशु° । १२ च. °दर्शने श° । १३ छ. आदिश° ।

भ्रान्तिदर्शनविषयत्वाच्च निमित्तस्यानिमित्तत्वं भवेत् । तदभावेऽभा[1]वात् । न हि सुषुप्तसमाहितमुक्तानां भ्रान्तिदर्शनाभाव आत्मव्यतिरिक्तो बाह्यो[2]ऽर्थ उपलभ्यते । न ह्युन्मत्तावगतं[3] वस्त्वनुन्मत्तै[4]रपि तथाभूतं गम्यते । एतेन द्वयदर्शनं[5] संक्लेशोपलब्धिश्च[6] प्रत्युक्ता[7] ॥ २६ ॥

द्वाभ्यामर्थापत्तिभ्यां बाह्यार्थवादे प्राप्ते विज्ञानवादमुद्भावयति—प्रज्ञप्तेरिति । अस्तु का नाम वस्तुक्षतिरित्याशङ्क्याऽऽह—निमित्तस्येति । मतान्तरे प्राप्ते तन्निराकरणमुच्यते—विज्ञानवादिनेति । श्लोकस्य तात्पर्यमाह—अत्रेति । तत्र पूर्वार्धं विभजते—बाढमित्यादिना । द्वैतिनस्तव तर्कप्रधानत्वान्न प्रतीतिमात्रशरणता युक्तेति मत्वाऽऽह—स्थिरी भवेति । वस्तुनो बाह्य[8]स्यार्थस्य तथात्वं प्रज्ञप्तिविषयत्वं तस्याभ्युपगमे कारणं प्रागुक्त[9]युक्तिदर्शनमित्येतस्मिन्नर्थे[10] त्वं स्थिरी भवेति योजना । विचारदृष्टिमेवावष्टभ्याहं वर्ते किं ततो दूषणं ब्रूहीति[11] पृच्छति—ब्रूहीति । तत्रोत्तरार्धं सिद्धान्ती व्याकुर्वन्नुत्तरमाह—उच्यत इत्यादिना । घटादेर्वैचित्र्ये[12]हेतुत्वे प्रश्नपूर्वकं हेतुमाह—कथमित्यादिना । परमार्थदर्शनं प्रपञ्चयति—न हीति । तत्र वैधर्म्यदृष्टान्तमाह—यथेति । घटे दर्शितं[13] न्यायं पटेऽपि[14] दर्शयति—पटो वेति । तन्तुष्वपि न्यायसौ[15]म्यमुदाहरति—तन्तव इति । परमार्थदर्शनफलमुपसंहरति—इत्येव[16]मिति । घटादीनां स्वकारणव्यतिरेकेणासतां न प्रत्ययवैचित्र्यहेतुत्वमतो घटादिप्रत्ययवत्प्रत्ययान्तराण्यपि प्रत्ययत्वाविशेषाद्वास्तवालम्बनवर्जितानि मन्तव्यानीत्यर्थः । भूतदर्शनं यौक्तिकं तत्त्वदर्शनं ततो निमित्तस्यानिमित्तत्वमिति व्याख्यातम् । इदानीमभूतदर्शनादिति पदच्छेदेन व्याख्यानान्तरमाह—अथ वेति । यथा रज्ज्वादावधिष्ठाने सर्पादेरारोपितस्य दर्शनान्न तस्य वस्तुनो दर्शनं प्रत्या[17]लम्बनत्वमिष्टम् । तथैवाधिष्ठानज्ञानापेक्षया परमार्थतो दर्शनाद्बा[18]ह्यस्यार्थस्य ज्ञानं प्रत्या[19]लम्बनत्वं वास्तवमभ्युपगन्तुमशक्यमित्यर्थः । किं च विमतो बाह्यार्थो न तत्त्वतो ज्ञानं प्रत्यालम्बनं भ्रान्तिविषयत्वाद्रज्ज्वां सर्पादिवदित्याह—भ्रान्तीति । हेतुं साधयति—तदभाव इति । भ्रान्त्यभावे बाह्यार्थो न भातीत्युक्तं हेतुं प्रपञ्चयति[20]—न हीति । देहाभिमानवतो बाह्यार्थप्रतिभानध्रौव्याददद्वैतदर्शिनोऽपि तत्प्रतिभानमप्रत्यूहं प्राप्नोतीत्याशङ्क्याऽऽह—न ह्युन्मत्तेति । बाह्यार्थसमर्थना[21]र्थमुक्तमर्थापत्तिद्वयं कथं निरसनीयमित्या[22]ह—एतेनेति

१ क. °भानात् । २ च बाह्यार्थ । ३ च. गतव । ४ क. नुपपत्तेर । ५ झ. र्शनसं । ६ च. °ब्धिश्चेत्यु° । ७ क. छ. प्रयुक्ता । ८ ग. छ झ बाह्यार्थ । ९ च. गुक्तं यु । १० ग. झ. °र्थे स्थि° । ११ ज. °ति । त । १२ ख. त्र्यद्धेतु । १३ घ ज. शितन्या । १४ ग. झ. पटे द° । १५ ख. ग. झ. सामान्यमु । १६ ख. ङ. ति । एव । १७ छ प्रत्ययाल° । १८ छ. °द्बाह्यार्थ° । १९ छ. प्रत्ययाल । २० ज. ति । दे° । २१ घ. ङ. ज. नार्थमर्था । २२ ग. छ. ज. °त्याशङ्क्याऽऽह ।

तत्त्वदर्शिनां स्फुरणातिरिक्तवस्त्वनुपलम्भप्रदर्शनेन वैचित्र्यदर्शनं दुःखोपलब्धिश्च प्रत्युक्ता। तेनानुपपद्यमानार्थापत्तिद्वयस्यानुत्थानम्। व्यवहारादृष्ट्या तु पूर्वभ्रमसमारोपितैस्वप्नवदेवै संवेदने वैचित्र्यं दुःखं च व्यवहाराङ्गमित्यन्यथाऽप्युपपत्तिरित्यर्थः॥२९

**चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च।**
**अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक्॥ २६॥**

यस्मान्नास्ति बाह्यं निमित्तमतश्चित्तं नं स्पृशत्यर्थं बाह्यालम्बनविषयम्। नाप्यर्थाभासं चित्तत्वात्स्वप्नचित्तवत्। अभूतो हि जागरितेऽपि स्वप्नार्थवदेव बाह्यः शब्दाद्यर्थो यत उक्तहेतुत्वाच्च। नाप्यर्थाभासश्चित्तात्पृथक्चित्तमेव हि घटाद्यर्थवदवभासते यथा स्वप्ने॥ २६॥

ज्ञानस्य सालम्बनत्वप्रसिद्धेस्तत्त्वदृष्ट्या ज्ञेयाभावे ज्ञानमपि न स्यादित्याशङ्क्याऽऽह चित्तमिति। न हि स्फुरणं सकर्मकं तस्य सकर्मकत्वप्रसिद्ध्यभावात्। जानातेस्तु सकर्मकत्वं क्रियाफलत्वकल्पनया स्वीकृतमिति भावः। चित्तस्यार्थस्पर्शित्वाभावेऽपि तदाभासस्पर्शित्वं स्यादित्याशङ्क्याऽऽह—**नार्थेति**। तत्र हेतुमाह—**अभूते इति**। प्रथमपादं व्याचष्टे—**यस्मादिति**। विमतं चित्तमर्थाभासमपि न स्पृशति चित्तत्वात्संप्रतिपन्नवदिति द्वितीयं पादं विभजते—**नापीति**। न हि दृष्टान्ते तस्यार्थाभासस्पर्शित्वं तस्यैव तदात्मना भानादित्यर्थः। तृतीयंपादं व्याकरोति—**अभूतो हीति**। विमतोऽर्थः सन्न भवत्यर्थत्वात्, संप्रतिपन्नवदित्यनुमानान्न ज्ञानस्याऽऽलम्बनमित्यर्थः। विमतोऽर्थः स्वविषयेज्ञानजनको न भवति भ्रान्तिविषयत्वात्संप्रतिपन्नवदित्युक्तमनुमानं स्मारयति—**उक्तेति**। अर्थजन्यत्वाभावे विज्ञानस्यार्थाभासजन्यत्वं स्यादित्याशङ्क्य चतुर्थपादार्थमाह—**नापीति**॥ २६॥

**निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु।**
**अनिमित्तो विपर्यासः कथं तस्य भविष्यति॥ २७॥**

ननु विपर्यासस्तर्ह्यसति घटादौ घटाद्याभासता चित्तस्य। तथा च सत्यविपर्यासः क्वचिद्वक्तव्य इति। अत्रोच्यते। निमित्तं विषयमतीता-

---

१ ग. छ. झ. °र्वभ्रान्तिस°। २ ख. ग. ङ. झ. °पितं स्व°। ३ ख. ङ. ज. °व वै°। ४ ख. °चित्र्ये दु°। ५ च. °स्तथा पृ°। ६ ख. घ. ज. न संस्पृ°। ङ. च. न संस्पर्शत्य°। ७ ज. °ते हि स्व°। ८ झ. स्मरणं। ९ ज. °र्मक°। १० झ. सर्वकर्मकत्वाङ्गि°। ११ झ. °लक°। १२ ङ. ज. °र्शितत्वा°। १३ घ. ङ. ज. °वे त°। १४ घ. ङ. ज. °र्शितत्वं। १५ ख. झ. °भूतो हीति। १६ घ. ङ. ज. °न्तेऽस्या°। १७ झ. °तीयं व्या°। १८ घ. °र्थः वि°। १९ ग. °यये ज्ञा°। २० घ. ङ. न. घटे घ°।

नागतवर्तमानाध्वसु त्रिष्वपि सदा चित्तं न स्पृशे[२]दे[३]व हि । यदि हि क्वचित्संस्पृशेत्सोऽविपर्यासः परमार्थत इति । अतस्तदपेक्षयाऽसति घटे घटा[४]द्याभासता विपर्यासः स्यान्न तु तदस्ति कदाचिदपि चित्तस्यार्थ[५]-संस्पर्शनम् । तस्मादनिमित्तो विपर्यासः कथं तस्य चित्तस्य भविष्यति न कथंचिद्विपर्यासोऽस्तीत्यभिप्रायः । अयमेव हि स्वभावश्चित्तस्य । य[६]दुतासति निमित्ते घटादौ तद्वदवभासनम् ॥ २७ ॥

ज्ञानस्य सालम्बनत्वाभावे तस्य तथात्वप्रथा भ्रान्तिर्भवेत् । भ्रान्तिश्चाभ्रान्तिप्रति-योगिनीत्यन्यथाख्यातिमाशङ्क्याऽऽह—**निमित्तमिति** । कालत्रये[७]ऽपि ज्ञानस्य वस्तु-तोऽर्थस्पर्शित्वाभावे तद्वासनाभावात्तज्जन्या नान्यथाख्यातिः सिध्यति । भ्रान्तिस्तु विधान्तरेणापि भविष्यतीत्याह—**अनिमित्त इति** । श्लोकव्यावर्त्यामाशङ्कां दर्शयति—**नन्विति** । यदि घटादि[८]र्बाह्यो[९]ऽर्थो न गृह्यते तर्हि तस्मिन्न[१०]सत्येव तदाभा[११]सताज्ञानस्य विपर्यासः । अतस्मिंस्तद्बुद्धेस्तथात्वात् । विपर्यासे च स्वीकृते क्वचिद[१२]प्यविपर्यासो वक्तव्यः, भ्रान्तेरभ्रान्तिपूर्वकत्वस्यान्यथाख्यातिवादिभिरिष्टत्वादित्यर्थः । तत्र पूर्वार्धयोजनया परिहरति—**अत्रेति** । उक्तमेवार्थमुत्तरार्धयो[१३]जनया साधयति—**यदीति** । अभ्रान्ते-रभावादसंभवे भ्रान्तेरसति घटादौ घटाद्याभासता ज्ञानस्य कथं निर्वहतीत्याशङ्क्याऽऽह—**अयमेवेति** । स्वभावशब्देनाविद्योच्यते । न हि भ्रान्तिरभ्रान्तिपूर्विकेति नियमः । सविषयाणां भ्रमाणामविद्यात्वाभ्युपगमादित्यर्थः ॥ २७ ॥

**तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।**
**तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥२८॥**

प्रज्ञप्तेः सनिमित्तत्वमित्याद्येतदन्तं विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्येणानुमोदितम् । तदेव हेतुं कृत्वा तत्प-क्षप्रति[१४]षेधाय तदिदमुच्यते तस्मादि[१५]त्यादि । यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिनाऽभ्युपगता तदनुमोदितमस्माभि-रपि भूतदर्शनात् । तस्मात्तस्यापि चित्तस्य[१६] जायमानाऽवभासताऽसत्येव जन्मनि युक्ता भवितुमित्यतो न जायते[१७] चित्तम् । यथा[१८] [१९]चित्तदृश्यं न

---

१ च. न संस्पृ° । २ ज. °शेत्सो° । ३ ख. घ. ङ. °व य° । घ. °व चित्तं य° । ४ क. छ. झ. °टाभा° । ५ च. झ. °र्थस्य सं° । ६ च. य अग्रे स° । ७ घ. ङ. ज. °ये विज्ञा° । ८ ख. °दिर्बाह्यो । ९ घ. ङ. ज. °बाह्यार्थो । १० क. °सत्येव । ११ क. °सत्वाज्ज्ञान° । १२ घ. ङ. ज. °दवि° । १३ क. ग. ज. झ. °जनार्थे सा° । १४ च. °षेधयाति । अतस्तदि° । १५ च. °दि ह्यस्मात्सत्ये° । १६ क. °स्य ज्ञाय° । १७ घ. चित्तं तथा । १८ घ. °था द° । १९ ज. चित्तं द° ।

जायतेऽतस्तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिनः क्षणिकत्वदुःखित्वशून्यत्वानात्मत्वादि च, तेनैव चित्तेन चित्तस्वरूपं द्रष्टुमशक्यं पश्यन्तः खे वै पश्यन्ति ते पदं पक्ष्यादीनाम्। अत इतरेभ्योऽपि द्वैतिभ्योऽत्यन्तसाहसिका इत्यर्थः। येऽपि शून्यवादिनः पश्यन्त एव सर्वशून्यतां स्वदर्शनस्यापि शून्यतां प्रतिजानते ते ततोऽपि साहसिकतराः खं मुष्टिनाऽपि जिघृक्षन्ति ॥ २८ ॥

बाह्यार्थवादिपक्षमेवं विज्ञानवादिमुखेन प्रतिक्षिप्य विज्ञानवादमिदानीमपवदति—**तस्मादिति**। प्रतिक्षणं विज्ञानस्य जन्म दृश्यते विज्ञानवादिभिरित्याशङ्क्याऽऽह—**तस्येति**। वृत्तसंकीर्तनपूर्वकं श्लोकस्य तात्पर्यमाह—**प्रज्ञप्तेरिति**। तच्च बाह्यार्थवादिनो बाह्योऽर्थो विज्ञानवदस्तीति पक्षप्रतिषेधमुखेन प्रवृत्तं तत्पुनराचार्येण भवत्वेवमित्यनुज्ञातम्, बाह्यार्थवाददूषणस्य स्वमतेऽपि संमतत्वादित्याह—**बाह्यार्थ इति**। बाह्यार्थवाददूषणानुमोदनप्रयोजनमाह—**तदेवेति**। असत्येव घटादौ घटाद्याभासत्वं विज्ञानस्य यदुक्तं तदेव हेतुत्वेनोपादाय विज्ञानवादनिषेधार्थं बाह्यार्थपक्षदूषणमनुमोदितमित्यर्थः। संप्रति विज्ञानवाददूषणमवतारयति—**तदिदमिति**। तस्मादित्यादि व्याचष्टे—**यस्मादिति**। भूतदर्शनाद्धटादेर्मृदादिमात्रं भूतं वस्तुतत्त्वं तस्यापि विज्ञप्तिमात्रं तत्त्वं तस्य शास्त्रतो दर्शनादिति यावत्। द्वितीयपादं दृष्टान्तत्वेन विभजते—**यथेति**। विमतं विज्ञानजन्म न तात्त्विकं दृश्यत्वान्नीलपीतादिवदित्यर्थः। विपक्षे दोषमाह—**अत इति**। तत्त्वतो विज्ञानस्य जन्मायोगाद्ये तस्य तात्त्विकं जन्म पश्यन्ति ते पक्ष्यादीनां खेऽपि पदं पश्यन्तीत्यन्वयः। अनात्मत्वादीत्यादिशब्देनान्योन्यविलक्षणत्वमन्योन्यसादृश्यं च गृह्यते। तत्र हेतुं सूचयति—**तेनैवेति**। स्ववृत्तेरनुपपत्तेस्तद्दृश्यतामन्तरेण च तद्धर्मदृश्यतासंभवादित्यर्थः। विज्ञानवादे फलितं विशेषं दर्शयति—**अत इति**। शून्यवादिनं प्रति विशेषं कथयति—**येऽपीति**। पश्यन्त एवेत्यविलुप्तदृग्रूपता द्योत्यते। दृग्बलादेव सर्वाभावः सिध्यति। दृगभावस्तु कथं सिध्येत्। न च तावद्दृगेव तदभावं साधयेत्। तयोरेककालत्वानुपपत्तेरित्यर्थः। किं च सर्वशून्यतां वदन्तः शून्यतादर्शनस्य स्वात्मदर्शनस्य च शून्यतां वदन्ति। तथा च स्वपक्षासिद्धिरित्यभिप्रेत्याऽऽह—**स्वदर्शनस्येति**। **ततोऽपीति**। विज्ञानवादिभ्योऽपीत्यर्थः ॥२८॥

---

१ च. °ते यत°। २ छ. °त्वशू°। ३ च. झ. °दुःखत्व°। ४ घ. ङ. ज. °त्तरू°। ५ झ. °श्यन्तोऽतः खे। ६ छ. °नन्ति ते। ७ ग. छ. झ. °कता°। ८ ग. °नो वि°। ९ छ. बाह्यार्थो वि°। झ. °बाह्यार्थवि°। १० क. छ. °खेनाप्र°। ११ ग. घ. ङ. ज. °व येव°। १२ क. छ. झ. °त्यभ्यनु°। १३ ख. खे प°। १४ क. छ. दृग्भाववस्तु। १५ घ. ङ. ज. °स्य शू°।

**अजातं जायते यस्मादजातिः प्रकृतिस्ततः।**
**प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति॥ २९॥**

उक्तैर्हेतुभिरजमेकं ब्रह्मेति सिद्धम्। यत्पुनरादौ प्रतिज्ञातं तत्फलोपसंहारार्थोऽयं श्लोकः। अजातं यच्चित्तं ब्रह्मैव जायत इति वादिभिः परिकल्प्यते[1] तदजातं जायते यस्मादजातिः[2] प्रकृतिस्तस्य[3] ततस्तस्मादजातरूपायाः प्रकृतेरन्यथाभावो जन्म न कथंचिद्भविष्यति॥ २९॥

यदि विज्ञानस्य[4] बाह्यालम्बनत्वं[5] क्षणिकत्वं शून्यत्वं च न संभवति किं तर्हि तत्त्वमेकरूपं[6] भवतीत्याशङ्क्याऽऽह—अजातमिति। तस्याश्च प्रकृतेरन्यथात्वं पुरस्तादेव निरस्तमित्याह—प्रकृतेरिति। श्लोकस्य तात्पर्यमाह—उक्तैरिति। कूटस्थमद्वितीयं ब्रह्मेति यत्पूर्वत्र प्रतिज्ञातं तज्जन्मनो[7] दुर्निरूपत्वादुक्तहेतुभिः सिद्धम्। तस्यैव सिद्धस्यार्थस्य फलमुपसंहर्तुमेष श्लोक इत्यर्थः। पूर्वार्धं योजयति—अजातमिति। यदि चित्तं स्फुरणमजातमभीष्टं[8] तर्हि तद्ब्रह्मैव तस्य कौटस्थ्यैकस्वाभाव्यात्[9][10]तत्पुनर्वस्तुतो न जातमेव[11] मायया जन्मवदिति कल्प्यते चेत्तस्याजातिरेवाजातत्वात्[12]प्रकृतिर्भवतीत्यर्थः। द्वितीयार्धं योजयति—अजातरूपाया इति। तस्याश्चेदन्यथात्वं स्वरूपहानिरापतेदित्यर्थः।

**अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति।**
**अनन्तता चाऽऽदिमतो मोक्षस्य न भविष्यति॥३०॥**

अयं चापर आत्मनः संसारमोक्षयोः परमार्थसद्भाववादिनां दोष उच्यते। अनादेरतीतकोटिरहितस्य संसारस्यान्तवत्त्वं समाप्तिर्न सेत्स्यति युक्तितः सिद्धिं नोपयास्यति[14]। न ह्यनादिः सन्नन्तवान्कश्चित्पदार्थो[15] दृष्टो लोके। बीजाङ्कुरसंबन्धनैरन्तर्यविच्छेदो[16] दृष्ट इति चेत्। न। एकवस्त्वभावेनापोदितत्वात्[17]। तथाऽनन्तताऽपि[18] विज्ञानप्राप्तिकालप्रभवस्य[19] मोक्षस्याऽऽदिमतो न भविष्यति[20]। घटादिष्वदर्शनात्। घटादिवि-

---

१ झ. °ते य°। २ च. °जातिस्ततस्त°। ३ ङ. छ. °स्य चित्तस्य त°। ४ ग. झ. °नवादस्य। ५ ग. झ. °त्वं शू°। ६ ग. झ. °कत्वरूपं च संभ°। ७ ग. झ. तत्तज्ज°। ८ ग. झ. °मपीष्टं। ९ ग. घ. ङ. ज. °टस्थैक°। १० घ. °व्यात्पु°। ११ ख. घ. ङ. ज. °तमिति मा°। १२ छ. °जायमानत्वा°। १३ च. °ता आदि°। १४ च. °ति। तर्ह्येना। १५ घ. ङ. ज. °श्चित्सत्प°। १६ च. ज. झ. °बन्धे नै°। १७ च. °वस्तुभावेनाऽऽपादि°। १८ च. झ. °पि ज्ञा°। १९ ख. घ. ङ. ज. °प्रसव°। २० ज. भवति।

नाशवदवस्तुत्वाददोष इति चेत् । तथा च मोक्षस्य परमार्थसद्भावप्रतिज्ञाहानिः । असत्त्वादेव शशविषाणस्येवाऽऽदिमत्त्वाभावश्च ॥ ३० ॥

कूटस्थं तत्त्वं तात्त्विकमित्यत्र हेत्वन्तरमाह—अनादेरिति । विमतः संसारो नान्तवाननादिभावत्वादात्मवदित्यर्थः । किं च मोक्षोऽनन्तो न भावत्वे सत्यादिमत्त्वाद्घटवदित्याह—अनन्तेति । श्लोकस्य तात्पर्यमाह—अयं चेति । तत्र पूर्वार्धं व्याकरोति—अनादेरिति । अतीतकोटिरहितस्य पूर्वं नाऽऽसीदित्यवच्छेदवर्जितस्येत्यर्थः । योऽनादिभावः सोऽन्तवान्नेति व्याप्तिरात्मनि व्यक्तेत्याह—न हीति । बीजाङ्कुरयोर्हेतुफलभावेन संबन्धस्तस्य नैरन्तर्यं संतानस्तस्यानादिभावत्वेऽपि विच्छेदस्यान्तस्य दृष्टत्वादनैकान्तिकतेति शङ्कते—बीजेति । भावत्वविशेष्यांशस्य तत्रावर्तनान्न व्यभिचारशङ्केति दूषयति—नैकेति । द्वितीयार्धं व्याचष्टे—तथेति । यत्राऽऽदिमत्त्वं तत्र नानन्तत्वमिति व्याप्तिभूमिमाह—घटादिष्विति । यथा कृतकोऽपि घटादिध्वंसो नित्यस्तथा बन्धध्वंसोऽपि भविष्यतीत्यनैकान्तिकत्वमाशङ्कते—घटादीति । मोक्षस्याभावत्वे सति परमार्थसत्त्वप्रतिज्ञा भज्येतेति दूषयति—तथा चेति । किं च प्रागसतः सत्तासमवायरूपं कार्यत्वं तदपि मोक्षस्यासत्त्वे न सिध्यतीत्याह—असत्त्वादेवेति ॥ ३० ॥

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ३१ ॥
सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ३२ ॥

वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रसङ्गेन पठितौ ॥ ३१ ॥ ३२ ॥

अस्तु तर्हि मोक्षस्याऽऽद्यन्तवत्त्वं तत्राऽऽह—आदाविति । यदित्यूषरोदकादि गृह्यते । तथा वस्तुतो नास्त्येवेति यावत् । वितथैस्तैरेव मरीच्युदकादिभिः । सादृश्यमाद्यन्तवत्त्वम् । विमता मोक्षादयो न परमार्थसन्तो भवितुमर्हन्त्याद्यन्तवत्त्वान्मरीच्युदकादि-

१ ज. °वस्तु° । छ. °वद्वस्तु° । २ च. न सति मो° । ३ च. °दिष्वत्यन्ताभावाश्च । अवितथा एव भावाः सप्रयोजनत्वादित्यत आह । आदावन्तेति ॥ ३१ ॥ सप्रयोजनतां तेषां निषेधयति । सप्रयोजनतेति । वै° । ४ ग. झ. न भविष्यत्या° । ख. छ. न भवति भा° । ५ घ. ङ. ज. °ववत्वे स° । ६ ग. छ. ज. °द्घटादिव° । ७ ख. °दिर्भावः । ८ ग. झ. °न्तर्यसं° । ९ छ. °शेषांश° । १० घ. °कमा° । ११ घ. ङ. °रूपका° । १२ ङ. ज. °दि ह्यूष° । १३ घ. ङ. ज. °वत्वेन वि° ।

वदित्यर्थः । कथं तर्हि मोक्षादीनामपि तथात्वप्रथेत्याशङ्क्याऽऽह—अवितथा इति । लक्षिता मूढैरविचारकैरिति[1] शेषः । ऊषरोदकादीनां स्नानपानादिप्रयोजनानुपलम्भान्मोक्षस्वर्गादीनां तु सुखादिप्राप्तिप्रयोजनप्रतिलम्भान्न मोक्षादिवैतथ्यमित्याशङ्क्याऽऽह[2]—सप्रयोजनतेति । तेषां मोक्षादीनामिति यावत् । पुनरुक्तिशङ्कां वारयति—वैतथ्य इति ॥ ३१ ॥ ३२ ॥

**सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् ।**
**संवृतेऽस्मिन्प्रदेशे वै भूतानां दर्शनं कुतः ॥ ३३ ॥**

निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनादित्ययमर्थः प्रपञ्चयत एतैः श्लोकैः ॥ ३३ ॥

किं च येन हेतुना स्वप्नस्य मिथ्यात्वमिष्टं तस्य जागरितेऽपि तुल्यत्वाज्जन्मादिरहितं संविन्मात्रं तत्त्वमेष्टव्यमिति विवक्षित्वाऽऽह—सर्व इति । यदि देहान्तर्दर्शना[3]न्मिथ्यात्वं स्वप्नस्येष्टं तर्हि वैराजदेहे सर्वस्य जागरितस्य दर्शनान्मिथ्यात्वं दुर्वारमित्यर्थः । किं च योग्यदेशवैधुर्यान्मिथ्यात्वं स्वप्नस्य यद्यभीष्टं तर्हि संवृते प्रदेशे[4] प्रत्यग्भूते ब्रह्मण्यखण्डैकरसे भूतानां विद्यमानानां दर्शनं[5] न कुतोऽपि स्याद्ब्रह्मणोऽनवकाशत्वादित्याह—संवृत इति । अवतारितश्लोकसहितानामुत्तरश्लोकानां जात्याभासमित्यस्मात्प्राक्तनानां तात्पर्यमाह—निमित्तस्येति ॥ ३३ ॥

**न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ।**
**प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥ ३४ ॥**

जागरिते गत्यागमनकालो[6] नियतो देशः प्रमाणतो यस्तस्यानियमान्नियमस्याभावात्स्वप्ने न देशान्तरगमनमित्यर्थः ॥ ३४ ॥

उक्तमेवार्थं प्रपञ्चयति—न युक्तमित्यादिना[7] । स्वप्ने देशान्तरगतौ नियतकालाभावान्न[8] गत्वा दर्शनमिष्टं तथा मरणादूर्ध्वमर्चिरादिमार्गेण गत्वा ब्रह्मदर्शनमयुक्तं कालानवच्छिन्नत्वादित्यर्थः । किं च यद्देशस्थः स्वप्नं पश्यति प्रतिबुद्ध[9]स्तस्मिन्देशे नास्तीति मिथ्यात्वमभीष्टम्[10] । तथा[11] यस्मिन्देशे स्थितः संसारमनुभवति[12] ब्रह्मभावं प्रतिपन्नस्तस्मिन्देहदेशे नास्ति[13] परिपूर्णब्रह्मरूपेणावस्थानादतो जागरितस्यापि

---

१ घ. °ति विशे° । २ झ. °ति विवक्षितत्वाद्धिति । ३ ज. झ. °न्तदर्श° । ४ ख. प्रत्य° । ५ घ. °नं कु° । ६ क. छ. °कालौ नियतौ दे° । ७ छ. °ना—किं च स्व° । ८ क. °वाच्च ग° । ९ ख. प्रबु° । १० ख. °त्वमिष्टं तथा । ११ क. ज. यथा । १२ ज. °नुवदाति । १३ ख. नास्तीति प° ।

मिथ्यात्व[1]मेष्टव्यमित्याह—प्रतिबुद्धश्चेति । श्लोकस्य तात्पर्यार्थं[2] कथयति—जाग-रित इति ॥ ३४ ॥

**मित्राद्यैः सह संमन्त्र्य[3] संबुद्धो न प्रपद्यते ।**
**गृहीतं चापि यत्किंचित्प्रतिबुद्धो न पश्यति ॥ ३५ ॥**

मित्राद्यैः सह संमन्त्र्य तदेव मन्त्रणं[4] प्रतिबुद्धो न प्रपद्यते[5] । गृहीतं[6] च यत्किंचिद्धिरण्यादि[7] न प्राप्नोति । गतश्च न देशान्तरं गच्छति स्वप्ने ॥ ३५ ॥

किं च यथा स्वप्ने विसंवादादप्रामाण्यमिष्टं तथा जागरितेऽपि परं श्रेयोऽस्माभिः साधनीयमिति सब्रह्मवादिभिः सह समालोच्याविद्यानिद्रातः[8] प्रतिबुद्धौ[9] नैव श्रेयःसा[10]ध्यत्व[11]मालोचितं प्रतिपद्यते । सर्वस्य नित्यमुक्तत्वनिश्चयात् । अतो मुमुक्षुत्वं श्रवणादिकर्तव्यता च भ्रान्त्यैवेत्याह—मित्राद्यैरिति । किं च स्वप्नवदेव गृहीतमुपदेशादि विद्वान्न पश्यति तत्साध्यफलाभावादित्याह—गृहीतं चेति । अथ वा लोकदृष्ट्या यत्किंचिद्गृहीतं वस्त्रान्नोदकादि तद्विद्वान्नैव किंचित्करोमीति प्रतिबुद्धो[12]ऽन्यप्रत्ययबाधान्न स्वसंबन्धित्वेनाधिगच्छति । तेन तदाभास[13]मात्रमेवेत्याह—गृहीतं चेति । उक्तमर्थं विवक्षित्वा श्लोकाक्षराणि योजयति—मित्राद्यैरित्यादिना ॥ ३५ ॥

**स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात् ।**
**यथा कायस्तथा सर्वं[14] चित्तदृश्यमवस्तुकम् ॥ ३६ ॥**

स्वप्ने चाटन्दृश्यते यः कायः सोऽवस्तुकस्ततोऽन्यस्य स्वोपदेश[15]स्थस्य पृथक्कायान्तरस्य दर्शनात् । यथा स्वप्नदृश्यः कायोऽसंस्तथा सर्वं चित्तदृश्यमवस्तुकं जागरितेऽपि चित्तदृश्यत्वादित्यर्थः । स्वप्नसमत्वादसज्जागरितमपीति प्रकरणार्थः ॥ ३६ ॥

किं च स्वप्नावस्थायां येन देहेन[16] नाड्यादिषु पर्यटति स मिथ्या पृथग्भूतस्य निश्चलस्य देहस्य दर्शनात् । तथा जागरिते येन परिव्राजकादिशरीरेण लोकस्य[17] पूज्यो द्वेष्यो वा दृश्यते स मिथ्या कथ्यते । पृथगेव कूटस्थब्रह्माख्यशरीरस्या[18]नुभवादित्याह—स्वप्ने चेति । किं च यथा स्वप्ने देहो मिथ्या तथा चित्तदृश्यं जडं सर्वमवस्तुकं मिथ्या-

---

१ छ. °त्वामिष्टमि° । २ ग. झ. °त्पर्यं क° । ३ ख. घ. च ज. °न्त्र्य प्रबु° । ४ झ. °णं न । ५ ख. घ. ङ. ज. प्रतिप° । ६ ख. घ. ङ. ज. °तं य° । ७ ख. च. घ. ङ. ज. झ. °ण्याद्यत° । ८ झ. °विद्यया नि° । ९ ग. झ. °तः सकाशात्प्रति° । १० झ. °साधनत्व° । ११ छ. °ध्यमा° । १२ ग. झ. प्रबु° । १३ ग. घ. °समे° । १४ च. सर्वश्चित्त° । १५ क. स्वापादे° । १६ क. छ. झ. °न नद्यादि° । १७ ख. °कपू° । १८ घ. °नुभावा° ।

भूतमेषितव्यमित्याह—**यथेति** । पूर्वार्धगतान्यक्षराणि योजयति—**स्वप्न इति** । उत्तरार्धगता[1]नि व्याकरोति—**यथेत्यादिना** । प्रकरणार्थमुपसंहरति—**स्वप्न इति**॥३६॥

**ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते ।**
**तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥ ३७ ॥**

इतश्चासत्त्वं जाग्रद्वस्तुनो जागरितवज्जागरि[2]तस्यैव ग्रहणाद्ग्राह्यग्राहकरूपेण [3]स्वप्नस्य[4] तज्जागरितं हेतुरस्य स्वप्न[5]स्य [6]स स्वप्नस्तद्धेतुर्जागरितकार्यमिष्यते । तद्धेतुत्वाज्जागरितकार्यत्वात्तस्यैव स्वप्न[7]दृश एव सज्जागरितं न त्वन्येषाम् । यथा स्वप्न इत्यभिप्रायः । यथा स्व[8]प्नः स्वप्नदृश ए[9]वं सन्साधारणविद्यमानवस्तुवदवभासते तथा तत्कारणत्वात्साधारणविद्यमानवस्तुवदवभासमा[10]नं न तु साधारणं विद्यमानवस्तु स्वप्नवदेवेत्यभिप्रायः ॥ ३७ ॥

यथा जागरितं तथा स्वप्नो गृह्यते । त[11]था च स्व[12]प्नस्य जागरितकार्यत्वाद्यः स्वप्नद्रष्टा तस्यैव जागरितं सदिति स्वप्न[13]वत्तन्मिथ्यात्वमित्याह—**ग्रहणादिति** । किं च जागरितस्य विद्यमानत्वमनेकसाधा[14]र[15]णत्वं च व[16]स्तुनो नास्ति स्वप्नकारणत्वात्किं तु तथा भासमानत्वमित्याह—**तद्धेतुत्वादिति** । जागरितस्य वस्तुतोऽसत्त्वे हेत्वन्तरपरत्वं श्लोकस्य दर्शयति—**इतश्चेति** । इतःशब्दार्थमे[17]वं स्फोरयन्पूर्वार्धं योजयति—**जागरितवदिति** । उत्तरार्धं योजयति—**तद्धेतुत्वादिति** । सति प्रमातरि बाध्यत्वं स्व[18]प्नस्य मिथ्यात्वं जागरितस्य पुन[19]स्तदनुपलम्भात्परमार्थतः सत्त्वम् । कार्यस्य मिथ्यात्वे कारणस्यापि मिथ्यात्वमिति मानाभावात् । न हि सर्वसाधारणं विद्यमानं न जागरितं मिथ्या भवितुं युक्तमित्याशङ्क्याऽऽह—**यथेत्यादिना** ॥ ३७ ॥

**उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् ।**
**न च भूतादभूतस्य संभवोऽस्ति कथंचन ॥ ३८ ॥**

ननु [20]स्वप्नकारणत्वे[21]ऽपि जागरितवस्तुनो न स्वप्नवदवस्तुत्वम् । अत्यन्तचलो हि स्वप्नो जागरितं तु स्थिरं लक्ष्यते । सत्यमे[22]वमविवेकिनां

---

१ ख. छ. °तान्यक्षराणि व्या° । २ क. घ. छ. °तस्यैव । ३ ख. स्वप्नस्तज्जा° । ४ घ. ङ. ज. °स्य जाग° । ५ क. °प्नस्त° । ६ घ. ङ. ज. स च स्व° । ७ ज. °प्नसद्द° । ८ च. स्वप्नद्द° । ९ च. झ. °व । सत्साधा° । १० च. °नं तु । ११ क. °था स्व° । १२ झ. °प्नजा° । १३ घ. ङ. ज. °वन्मि° । १४ ग. झ. °रणं च । १५ क. °त्वं व° । १६ ग. झ. वस्तुतो । १७ ग. छ. झ. °व स्फुटय° । १८ ग. झ. °प्नमि° । १९ झ. घ. °स्तदुप° । २० ख. छ. ज. स्वप्नं प्रति का° । २१ क. घ. °त्वे जा° । २२ क. °मेवावि° ।

स्यात् । विवेकिनां तु न कस्यचिद्वस्तुन उत्पादः प्रसिद्धोऽतोऽप्रसिद्धत्वादुत्पादस्याऽऽत्मैव सर्वमित्यजं सर्वमुदाहृतं वेदान्तेषु सबाह्याभ्यन्तरो ह्यज इति । यदपि मन्यसे जागरितात्सतोऽसत्स्वप्नो जायत इति तदसत् । न भूताद्विद्यमानादभूतस्यासतः संभवोऽस्ति लोके । न ह्यसतः शशविषाणादेः संभवो दृष्टः कथंचिदपि ॥ ३८ ॥

कार्यकारणभावेऽपि स्वप्नजागरितयोर्न मिथ्यात्वमविशिष्टमत्यन्तवैषम्यादित्याशङ्क्याऽऽह—उत्पादस्येति । यत्तु कार्यकारणत्वं सत्यासत्ययोरिव स्वप्नजागरितयोरित्युक्तं तद्दुरुक्तमित्याह—न चेति । श्लोकव्यावर्त्यामाशङ्कामाह—नन्विति । किमिदं वैलक्षण्यमविवेकिनां प्रतिभाति किं वा विवेकिनामिति विकल्प्याऽऽद्यमङ्गीकरोति—सत्यमिति । द्वितीयं प्रत्याह—विवेकिनां त्विति । द्वितीयभागमाकाङ्क्षाद्वारा विभजते—यदपीत्यादिना । संभवो नासतोऽस्तीत्येतद्दृष्टान्तेन साधयति—न हीति । कथं चिदपि सतोऽसतो वेत्यर्थः ॥ ३८ ॥

असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः ।
असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥ ३९ ॥

ननूक्तं त्वयैव स्वप्नो जागरितकार्यमिति तत्कथमुत्पादोऽप्रसिद्ध इत्युच्यते । शृणु तत्र यथा कार्यकारणभावोऽस्माभिरभिप्रेत इति । असदविद्यमानं रज्जुसर्पवद्विकल्पितं वस्तु जागरिते दृष्ट्वा तद्भावभावितस्तन्मयः स्वप्नेऽपि जागरितवद्ग्राह्यग्राहकरूपेण विकल्पयन्पश्यति तथाऽसत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यत्यविकल्पयन् । चशब्दात्तथा जागरितेऽपि दृष्ट्वा स्वप्ने न पश्यति कदाचिदित्यर्थः । तस्माज्जागरितं स्वप्नहेतुरुच्यते न तु परमार्थसदिति कृत्वा ॥ ३९ ॥

यदुक्तमुत्पादस्याप्रसिद्धत्वं तदयुक्तम् । स्वप्नजागरितयोस्त्वया कार्यकारणत्वाङ्गीकरणादित्याशङ्क्याऽऽह—असदिति । जागरिते दृष्टस्य स्वप्ने दर्शनाज्जागरितस्य स्वप्नं प्रति कारणत्वं चेत्तर्हि स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात्तस्य जागरितं प्रति कारणत्वं किं न स्यादित्याशङ्क्याऽऽह—असत्स्वप्नेऽपीति । श्लोकव्यावर्त्यामाशङ्कामुत्थापयति—नन्विति । पूर्वापरविरोधे चोदिते परिहारे कथ्यमाने मनःसमाधानं प्रार्थयते—शृण्विति । तमेव प्रकारं प्रकटयन्नक्षराणि योजयति—असदिति ।

१ ग. यद्यपि । २ ग. °रणभा° । ३ झ. °रणं स्व° । ४ ग. °त्ययोः स्व° । ५ क. ख. °योरेव । ६ ख. तदयुक्त° । ७ च. स्वप्ने हे° । ८ क. °स्त्वका° । ९ च. °रितदृ° । १० ग. स्वप्नद° । ११ ग. प्रार्थ्यते ।

तुच्छत्वं व्यवच्छिनत्ति—रज्ज्विति । दर्शनस्याऽऽभासत्वं सूचयति—विकल्पितमिति । यथा जाग्रद्दृष्टस्य विशेषस्य स्वप्ने दर्शनाज्जागरितवासनाधीनः स्वप्नो जागरितकार्यत्वेन व्यवह्रियते तथा स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात्तत्कार्यत्वं जागरितस्य प्राप्तमित्याशङ्क्य द्वितीयार्धं व्याचष्टे—तथेति । यत्तु स्वप्नजागरितयोरुक्तं कार्यकारणत्वं तदपि न नियतमिति निपातार्थं कथयति—चशब्दादिति । तस्मात्प्रायशः स्वप्नस्य जाग्रद्वासनाधीनत्वादिति यावत् । जागरितस्य परमार्थसत्त्वात्कार्यस्य स्वप्नस्यापि तादात्म्यात्तथात्वं विवक्षित्वा कार्यकारणत्वप्रथा कथं न भवतीति व्यावर्त्यं कथयति—न त्विति ॥ ३९ ॥

नास्त्यसद्धेतुकमसत्सदसद्धेतुकं तथा ।
सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुतः ॥ ४० ॥

परमार्थतस्तु न कस्यचित्केनचिदपि प्रकारेण कार्यकारणभाव उपपद्यते । कथम् । नास्त्यसद्धेतुकमसच्छशविषाणादि हेतुः कारणं यस्याऽसत एव खकुसुमादेस्तदसद्धेतुकमसन्न विद्यते । तथा सदपि घटादिवस्तु असद्धेतुकं शशविषाणादिकार्यं नास्ति । तथा सच्च विद्यमानं घटादि विद्यमानघटादिवस्त्वन्तरकार्यं नास्ति । सत्कार्यमसत्कुत एव संभवति । न चान्यः कार्यकारणभावः संभवति शक्यो वा कल्पयितुम् । अतो विवेकिनामसिद्ध एव कार्यकारणभावः कस्यचिदित्यभिप्रायः ॥ ४० ॥

व्यवहारदृष्ट्या कार्यकारणत्वं स्वप्नजागरितयोरुक्तम् । तत्त्वदृष्ट्या त्वप्रसिद्धमेव क्वचिदपि कार्यकारणत्वमिति वदन्वस्तुनोऽज्ञानादवस्त्वेव कार्यं भवतीति मतं व्यावर्तयति—नास्तीति । शून्यवादिनस्तु सदेव कार्यं जायते शून्यादिति मन्यन्ते तान्प्रत्याह—सदिति । तथेत्यनेन नास्तीत्येतदनुकृष्यते । सांख्यादयस्तु कार्यकारणयोर्द्वयोरपि सत्त्वं संगिरन्ते तान्प्रत्युक्तम्—सच्चेति । सद्ब्रह्म कारणं मिथ्याप्रपञ्चसृष्टेरित्येके वर्णयन्ति तान्निराचष्टे—सद्धेतुकमिति । श्लोकस्य तात्पर्यमाह—परमार्थतस्त्विति ।

---

१ ख. °कल्पयन्निति । २ ख. जागरे दृष्ट° । ३ ग. छ. झ. °ज्जाग्रद्वास° । ४ ग. °र्थं च क° । ५ झ. सत्यत्वा° । ६ घ. °त्त्वात्तत्का° । ७ ख. घ. झ. °णत्वं क° । ग. °णत्वकथा न । ८ च. कथं तत्राऽऽह । ना° । ९ क. खपुष्पादे° । १० च. °देरस° । ११ च. °सद्विद्य° । १२ झ. °तु श° । घ. °तुकश° । १३ छ. °स्ति । सत्का° । झ. °स्ति स° । १४ क. घ. °दि व° । १५ छ. °मप्रसि° । १६ क. प्रतिषिद्ध° । १७ ग. °स्तुतोऽज्ञा° । १८ झ. ज. शून्यत्वादि° । १९ ग. झ. °स्तीत्यनु° ।

प्रसिद्धं कार्यकारणत्वं यया कया च प्रक्रियया प्रतिपादयितुमुचितमन्यथा प्रसिद्धिप्रकोपादित्याक्षिपति—**कथमिति**। अनिर्वाच्यं मायामयं कार्यकारणत्वं प्रतीतिमात्रसिद्धमयौक्तिकमधिकृत्य प्रसिद्धिरविरुद्धेत्यभिसंधायाऽऽद्यं पादं विभजते—**नास्तीत्यादिना**। द्वितीयं पादं व्याचष्टे—**तथेत्यादिना**। तृतीयं पादं व्याकरोति—**तथा सच्चेति**। चतुर्थपादार्थमाह—**असदिति**। अस्तु तर्हि प्रकारान्तरेण कार्यकारणभाव इत्याशङ्क्य योग्यानुपलब्धिविरुद्धत्वान्नैवमित्याह—**न चेति** ॥ ४० ॥

## विपर्यासाद्यथा जाग्रदचिन्त्यान्भूतवत्स्पृशेत् ।
## तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥ ४१ ॥

पुनरपि जाग्रत्स्वप्नयोरसतोरपि कार्यकारणभावाशङ्कामपनयन्नाह। विपर्यासादविवेकतो यथा जाग्रज्जागरितेऽचिन्त्यान्भावानशक्यचिन्तनीयान्रज्जुसर्पादीन्भूतवत्परमार्थवत्स्पृशन्निव विकल्पयेदित्यर्थः। कश्चिद्यथा तथा स्वप्ने विपर्यासाद्धस्त्यादीन्धर्मान्पश्यन्निव विकल्पयति तत्रैव पश्यति न तु जागरितादुत्पद्यमानानित्यर्थः ॥ ४१ ॥

स्वप्नजागरितयोर्वस्तुतो नास्ति कार्यकारणत्वमित्यत्रैव हेत्वन्तरमाह—**विपर्यासादिति**। श्लोकस्य तात्पर्यमाह—**पुनरपीति**। अक्षरार्थं कथयति—**विपर्यासादित्यादिना**। कश्चिदित्यस्य पूर्वेण क्रियापदेन संबन्धः। दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—**यथेत्यादिना** ॥ ४१ ॥

## उपलम्भात्समाचारादस्तिवस्तुत्ववादिनाम् ।
## जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥ ४२ ॥

याऽपि बुद्धैरद्वैतवादिभिर्जातिर्देशितोपदिष्टा। उपलम्भनमुपलम्भस्तस्मादुपलब्धेरित्यर्थः। समाचाराद्वर्णाश्रमादिधर्मसमाचरणात्। ताभ्यां हेतुभ्यामस्तिवस्तुत्ववादिनामस्ति वस्तुभाव इत्येवंवदनशीलानां दृढाग्रहवतां श्रद्दधानानां मन्दविवेकिनामर्थोपायत्वेन सा देशिता जातिः। तां गृह्णन्तु तावत्। वेदान्ताभ्यासिनां तु स्वयमेवाजाद्वयात्मविषयो विवेको भविष्यतीति न तु परमार्थबुद्ध्या। ते हि श्रोत्रियाः स्थूलबुद्धित्वादजातेरजातिवस्तुनः सदा त्रस्यन्त्यात्मनाशं मन्यमाना अविवेकिन इत्यर्थः। उपायः सोऽवतारायेत्युक्तम् ॥ ४२ ॥

---

१ ग. °या च। २ ग. घ. झ. 'द्धिका°। ३ घ. यथा। ४ च. °नयंस्तमाह। ५ क. °सादिवि°। ६ ख. °साद्धिरुद्धान्हस्त्या°। ७ क. °दीन्प°। ८ झ. °श्यंतीव। ९ घ. ज. °स्तुनोर्नास्ति। १० क. °म्। ये।

तत्त्वदृष्ट्या कार्यकारणत्वस्याप्रसिद्धत्वे कथं जन्मादिसूत्रप्रमुखैः सूत्रैर्जगत्कारणं ब्रह्म सूत्रितमित्याशङ्क्याऽऽह—**उपलम्भादिति** । अविवेकिनां विवेकोपायत्वेन कार्यकारणत्वमुपेत्य सूत्रकारप्रवृत्तिरित्यर्थः । श्लोकाक्षराणि व्याचष्टे—**याऽपीत्यादिना** । अस्ति वस्तुभावो द्वैतस्येति शेषः । कार्यकारणभावमुपेत्य जन्मोपदिशतामद्वैतवादिनां मन्दविवेकिषु विवेकदार्ढ्योपायत्वेन कथं तदुपदेशः स्यादित्याशङ्क्याऽऽह—**तामिति** । यदा ब्रह्मणः सकाशादशेषं जगद्भवतीत्यभ्युपेतं तदा तदतिरेकेण जगतोऽभावाद्ब्रह्मैव सर्वमिति निश्चितम् । तद्विषयेषु च वेदान्तेषु पौर्वापर्येणाऽऽलोचितेषु तदभ्यासिनां तेषां तदभ्यासप्रसादादेव कूटस्थाद्वितीयवस्तुविवेकदार्ढ्यं सेत्स्यतीत्यभिप्रेत्याद्वैतवादिभिर्जातिरुपदिष्टा न तु द्वैतस्य श्रुतितो न्यायतश्च निरूपयितुमशक्यस्य परमार्थत्वं गृहीत्वा जातिरुपदिष्टेत्यजातिरेव पारमार्थिकीत्यर्थः । चतुर्थपादार्थमाह—**ते हीति** । तेषां विवेकोपायत्वेन जातिरुपदिष्टेत्यत्रोपक्रममनुकूलयति—**उपाय इति** ॥ ४२ ॥

**अजातेस्त्रसतां तेषामुपलम्भाद्वियन्ति ये ।**
**जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति ॥४३॥**

**ये चैवमुपलम्भात्समाचाराच्चाजातेरजातिवस्तुनस्त्रसन्तोऽस्ति वस्त्वित्यद्वयादात्मनो वियन्ति विरुद्धं यन्ति द्वैतं प्रतिपद्यन्त इत्यर्थः । तेषामजातेस्त्रसतां श्रद्दधानानां सन्मार्गावलम्बिनां जातिदोषा जात्युपलम्भकृता दोषा न सेत्स्यन्ति सिद्धिं नोपयास्यन्ति । विवेकमार्गप्रवृत्तत्वात् । यद्यपि कश्चिद्दोषः स्यात्सोऽप्यल्प एव भविष्यति । सम्यग्दर्शनाप्रतिपत्तिहेतुक इत्यर्थः ॥ ४३ ॥**

उदरमन्तरं कुरुते । अथ तस्य भयं भवतीत्यादिश्रुतिभ्यो ब्रह्मणि विकारदर्शिनां भयप्राप्तिः श्रूयते । तथा च श्रोत्रियाणामपि भेददर्शिनां नानुग्राह्यतेत्याशङ्क्याऽऽह—**अजातेरिति** । न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छतीति स्मृतेस्तेषामात्यन्तिकपतनाभावेऽपि निन्दानुपपत्त्या कश्चिद्दोषलेशः संभवतीत्याशङ्क्य सम्यग्दर्शनाप्राप्तिप्रयुक्तं गर्भवासादिदोषमभ्यनुजानाति—**दोषोऽपीति** । अन्वयमादर्शयन्पादत्रयगतान्यक्षराणि योजयति—**ये चेत्यादिना** । चतुर्थपादं व्याचष्टे—**यद्यपीति** । कश्चिन्निन्दानुपपत्तिसूचित इति यावत् ॥ ४३ ॥

---

१ ग. °ये च । २ छ. °षु वे° । ३ ग. छ. झ. °स्तुविषयवि° । ४ क. °ति ॥ ४२ ॥ ते° । ५ झ. °त्यत्र पादोप° । ६ क. °ति । उ । ७ घ. °स्त्विति सद्वयमात्म° । ८ क. ख. छ °यात्म° । ९ ख. च. झ. °रुद्धय° । १० क. घ. ङ. ज. °दर्शनाप्रानु° । ११ ख. ग. घ. छ. ङ. °श्चिदेव ले° ।

उपलम्भात्समाचारान्मायाहस्ती यथोच्यते ।
उपलम्भात्समाचारादस्ति वस्तु तथोच्यते ॥ ४४ ॥

ननूपलम्भसमाचारयोः प्रमाणत्वादस्त्येव द्वैतं[1] वास्त्विति । न । उपलम्भसमाचारयोर्व्यभिचारात् । कथं व्यभिचार इत्युच्यते । उपलभ्यते हि मायाहस्ती । हस्तीव हस्तिनमिवात्र समाचरन्ति । बन्धनारोहणादिहस्तिसंबन्धिभिर्धर्मैर्हस्तीति चोच्यतेऽसन्नपि यथा तथैवोपलम्भात्समाचाराद्द्वैतं[2] भेदरूपमस्ति वस्त्वित्युच्यते । तस्मान्नोपलम्भसमाचारौ द्वैतवस्तुसद्भावे हेतू भवत इत्यभिप्रायः ॥ ४४ ॥

यत्तु हेतुभ्यां द्वैतस्यास्तित्वमुक्तं तद्दूषयति—उपलम्भादिति । श्लोकव्यावर्त्यामाशङ्कामनूद्य दूषयति—नन्वित्यादिना । व्यभिचारस्यासिद्धिमाशङ्क्य परिहरति—कथमित्यादिना । उपलम्भसमाचारौ मायामये हस्तिनि वस्तुत्वाभावेऽपि भवतः, तथा द्वैतेऽपि न तयोरस्ति वस्तुत्वसाधकत्वमित्युपसंहरति[3]—तस्मादिति ॥ ४४ ॥

जात्याभासं चलाभासं वस्त्वाभासं तथैव च ।
अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ॥ ४५ ॥

किं पुनः परमार्थसद्वस्तु यदास्पदा जात्याद्यसद्बुद्धय इत्याह[4] । अजाति सज्जातिवदवभासत इति जात्याभासम् । तद्यथा देवदत्तो जायत इति । चलाभासं चलमिवाऽऽभासत[5] इति । यथा स एव देवदत्तो गच्छतीति । वस्त्वाभासं वस्तु द्रव्यं धर्मि तद्वदवभासत इति वस्त्वाभासम् । यथा स एव देवदत्तो गौरो दीर्घ इति । जायते देवदत्तः स्पन्दते दीर्घो[6] गौर[7] इत्येवमवभासते । परमार्थतस्त्वजमचलमवस्तुत्वमद्रव्यं च । किं तदेवंप्रकारं[8] विज्ञानं विज्ञप्तिः । जात्यादिरहितत्वाच्छान्तम् । अत एवाद्वयं च तदित्यर्थः ॥ ४५ ॥

भूतदर्शनावष्टम्भेन निमित्तस्यानिमित्तत्वमुक्तमेतदन्तैः[9] श्लोकैर्विप्रपञ्चितम् । संप्रति भूतदर्शनमुपसंहरति—जात्याभासमिति । श्लोकाक्षराण्याकाङ्क्षाद्वारा विवृणोति—किं पुनरित्यादिना । गौरत्वदीर्घत्वोक्त्या देवदत्तस्य गुणवत्त्वेन द्रव्यत्वं

---

१ च. झ. द्वैतव° । २ च. °द्द्वैतरू° । झ. द्द्वैतभे° । ३ झ. °कमि° । झ. ४ च. इत्यत आह । ५ क. °ह जा° । ६ क. °लनमि° । ७ ख. दीर्घगौ° । ८ ज. °कारवि° । ९ ग. झ. °त्वमे° ।

स्फुटी क्रियते । पूर्वार्धार्था[1]नुवादेना[2]परार्धं योजयति—जायत इत्यादिना । विशेष्यं प्रश्नपूर्वकं विशदयति—किं तदित्यादिना ॥ ४५ ॥

**एवं न जायते चित्तमेवं धर्मा अजाः स्मृताः ।**
**एवमेवं[3] विजानन्तो न पतन्ति विपर्यये ॥ ४६ ॥**

एवं यथोक्तेभ्यो हेतुभ्यो न जायते चित्तमेवं धर्मा आत्मानोऽजाः स्मृता ब्रह्मविद्भिः । धर्मा इति बहुवचनं दे[4]हभेदानुविधायित्वादद्वयस्यैवोपचा[5]रतः । एवमेव यथोक्तं विज्ञानं जात्यादिरहितमद्वयमात्मतत्त्वं विजानन्तस्त्यक्तबाह्यैषणाः पु[6]नर्न पतन्त्यविद्याध्वान्तसागरे विपर्यये । "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्यादिमन्त्रवर्णात् ॥ ४६ ॥

ब्रह्मणश्चिद्रूपस्याजत्वमुपपादितमुपसंहरति—ए[7]वं नेति । चि[8]त्प्रतिबिम्बा[9]नां जीवानां बिम्बभूतब्रह्ममात्रत्वादजत्व[10]मविशिष्टमित्याह—एवमिति । उक्तब्रह्मात[11]मैक्यज्ञानस्य फ[12]लमाह—एवमिति । श्लोकाक्षराणि व्याकरोति—एवमित्यादिना । कार्यकारणभावस्य दुर्भणत्वाद[13]यो य[14]थोक्ता हेतवः । चित्तं चैतन्यं ब्रह्मेति यावत्—एवमिति । प्रतिबिम्बानां बिम्बमात्रत्वं जीवानामपि प्रतिबिम्बकल्पानां बिम्बभूतब्र[15]ह्ममात्रत्वादित्यर्थः । अद्वयस्य बहुवचनभाक्त्वमयुक्तमित्याशङ्क्याऽऽह—धर्मा इतीति । उत्तरार्धं योजयति—एवमेवेति । विज्ञा[16]नं विज्ञप्तिरूपं ब्र[17]ह्मेत्यर्थः । यथोक्तज्ञाने मुख्या[18]नधिकारिणो व्यपदिशति—त्यक्तेति । उक्तज्ञानवतां संसारसंत्रासाभावे प्रमाणमाह—तत्रेति ॥ ४६ ॥

**ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ।**
**ग्रहणग्राहकाभासं विज्ञा[19]नस्पन्दितं तथा ॥ ४७ ॥**

यथोक्तं परमार्थदर्शनं प्रपञ्चयिष्यन्नाह—यथा हि लोक ऋजुवक्रादिप्रकाराभासमलातस्पन्दितमुल्काचलनं तथा ग्रहणग्राहकाभासं वि[20]षयिविषयाभासमित्यर्थः । किं तद्विज्ञानस्पन्दितम् । स्पन्दितमिव स्प-

---

१ ग. झ. °र्धानु° । २ ग. झ. °देन प° । ३ च. °व च विज्ञातो न । ४ क. देहे भे° । ५ च. °चारात् । ए° । ६ घ. पुनः पुनर्निप° । ७ ख. ङ. ज. एवमिति । ८ छ. झ. चित्तप्रति° । ९ झ. °नां बि° । १० घ. °मवशि° । ११ छ. °त्मैकत्वज्ञा° । १२ ग. छ. झ. °लवत्त्वमा° । १३ घ. °योग्या य° । १४ छ. °थोक्तहे° । १५ ख. घ. ङ. ज. °ह्मत्वा° । १६ घ. ङ. ज. °नं ज्ञ° । १७ ग. छ. झ. ब्रह्मैवेत्य° । १८ ख. छ. झ. °ख्याधि° । १९ च. झ. °ज्ञानं स्प° । २० क. °षया° ।

न्दितमविद्यया[1] । न ह्यचलस्य विज्ञानस्य स्पन्दनमस्ति । अजाचल-
मिति ह्युक्तम् ॥ ४७ ॥

विज्ञानमजमचलमेव जात्याभासं[2] चलाभासं चेत्युक्तं तदिदानीं दृष्टान्तेन प्रपञ्च-
यति—**ऋजुवक्रादिकेति** । अप्रच्युतपूर्वस्वरूपस्यासत्यनानाकारावभासो विवर्तस्तदत्र
विज्ञानस्य[3] स्पन्दितत्वम् । श्लोकस्य तात्पर्यमाह—**यथोक्तमिति** । तत्र दृष्टान्तभागं
व्याचष्टे—**यथा हीति** । दार्ष्टान्तिकं योजयति—**तथेति** । किमित्यविद्यामन्तरेण
मुख्यमेव स्पन्दनं विज्ञानस्य नेष्यते तत्राऽऽह—**न हीति** । निरवयवस्य विभुनो विज्ञा-
नस्य वस्तुतश्चलनविकलस्या[4]विद्यमानमेव[5] स्पन्दनमित्यत्र वाक्योपक्रमानुकूल्यं[6] कथयति—
**अजेति**[7] ॥ ४७ ॥

**अस्पन्दमानमलातमनाभासमजं[8] यथा ।**
**अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥ ४८ ॥**

अस्पन्दमानं स्पन्दनवर्जितं तदेवालातमृज्वाद्याकारेणाजायमानम[9]-
नाभासमजं यथा तथाऽविद्यया[10] स्पन्दमानमविद्योपरमेऽस्पन्दमानं
जात्याद्याकारेणानाभासमजमचलं[11][12] भविष्यतीत्यर्थः ॥ ४८ ॥

विज्ञानं शान्तमित्युक्तं दृष्टान्तेन स्पष्टयति—**अस्पन्दमानमिति** । श्लोकाक्षराणि
व्याकरोति—**अस्पन्दमानमित्यादिना** । तथाऽविद्ययेत्यत्राविद्ययेति च्छेदः ॥ ४८॥

**अलाते स्पन्दमाने वै नाऽऽभासा[13] अन्यतोभुवः ।**
**न ततोऽन्यत्र निस्पन्दान्नालातं[14] प्रविशन्ति ते ॥ ४९ ॥**

किं च तस्मिन्नेवालाते स्पन्दमान ऋजुवक्राद्याभासा अलातादन्यतः
कुतश्चिदागत्यालातेनैव भवन्तीति नान्यतोभुवः । न च तस्मान्निस्पन्दा-
दलातादन्यत्र निर्गताः । न च निस्पन्दमलातमेव प्रविशन्ति ते ॥४९॥

अलातदृष्टान्ते कथमृजुवक्रादीनामसत्त्वमित्याशङ्कायां निरूपणासहत्वादित्याह[15]—
**अलात इति** । यदा खल्वलातं स्पन्दमानमवतिष्ठते तदा तस्मिन्नन्यतो देशान्तरा-
दागत्याऽऽभासा भवन्तीति न शक्यं वक्तुमृजुवक्राद्याभासानां देशान्तरादागमनस्यानव[16]-

१ छ. °विद्याया न । २ क. घ. ज. °सं चे° । ३ ख. ज. °नस्प° । ४ क. °कलपस्या° ।
५ ख. घ. छ. °विद्यया विद्यमा° । ६ घ. वाक्यक्र° । ७ ज. अजस्येति । ८ ङ. च. ज. °नमाला° ।
९ च. °रेण जा° । १० झ. °विद्यास्प° । ११ झ. ङ. ज. °त्याका° । १२ च. °रेण ना° । १३ ख.
घ. ङ. ज. °साश्चान्य° । १४ घ. °स्पन्दन्ना° । १५ झ. °सत्त्वादि° । १६ ख. °रागम°. ।

गमात् । यदा तदेवालातं निस्पन्दनं स्पन्दनवर्जितं वर्तते तदा ततोऽन्यत्राऽऽभासा भवन्तीत्यपि न युक्तं[1] वक्तुमनुपलम्भाविशेषात् । न चाऽऽभासास्तस्मिन्नेवालाते लीयन्ते तदनुपादानत्वात् । यदि हि स्पन्दन[2]निमित्तमलातमुपादानं तदा निमित्ताभाव[3]मात्रान्नैमित्तिकाभावादर्शनादृजुवक्राद्याकाराः स्पन्दनाभावेऽप्यलाते भवेयुरित्यर्थः । इतश्च दृष्टान्ते दृष्टान्ता[5]नामाभासानां मिथ्यात्वमेष्टव्यमित्याह—**किं चेति** । हेत्वन्तरमेव स्पष्टयन्पूर्वार्धाक्षराणि व्याचष्टे—**तस्मिन्नेवेति** । आभासानां देशान्तरादागमनस्यानुपलम्भो हेतुः कर्तव्यः । अनुपलब्धिमेव हेतूकृत्य तृतीयपादार्थमाह—**न चेति** । चतुर्थपादार्थमाह—**न च निस्पन्दमिति** ॥ ४९ ॥

**न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः ।**
**विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः ॥ ५० ॥**

किं च[6] न निर्गता अलातात्त आभासा गृहादि[7]वद्द्रव्यत्वाभावयोगतः । द्रव्यस्य भावो द्रव्यत्वम् । तदभावो द्रव्यत्वाभावः । द्रव्यत्वाभावयोगतो द्रव्यत्वाभावयुक्ते[8]र्वस्तुत्वाभावादित्यर्थः । वस्तुनो हि प्रवेशादि संभवति नावस्तुनः । विज्ञानेऽपि जात्या[9]द्याभासास्तथैव स्युराभासस्याविशेषतस्तुल्यत्वात् ॥ ५० ॥

ऋजुवक्राद्याभासानां दृष्टान्ते निर्गमनप्रवेश[10]योरसंभवं साधयति—**नेत्यादिना** । दृष्टान्त[11]निविष्टाभासवद्दार्ष्टान्तिकेऽपि[12] जन्माद्याभासा मिथ्यैव भवेयुरित्याह—**विज्ञानेऽपीति** । ऋजुवक्राद्याकारेषु जन्माद्याकारेषु चाऽऽभासत्व[13]स्य तुल्यत्वादिति हेतुमाह—**आभासस्येति** । इतश्च दृष्टान्ते मिथ्यात्व[14]माभासानामेष्टव्यमित्याह—**किं चेति** । तदेव पूर्वार्धयोजनया[15] विशदयति—**नेति** । ऋजुवक्राद्याभासानां वस्तुतोऽभावेऽपि किमिति प्रवेशाद्यसिद्धिरित्याशङ्क्याऽऽह—**वस्तुनो हीति** । द्वितीयार्धं[16] योजयन्दार्ष्टान्तिकमाचष्टे—**विज्ञानेऽपीति** ॥ ५० ॥

कथं तुल्यत्वमित्याह—

**विज्ञाने स्पन्दमाने वै नाऽऽभासा अन्यतोभुवः ।**
**न ततोऽन्यत्र निस्पन्दान्न विज्ञानं विशन्ति ते ॥५१॥**

---

१ ख. °युक्तम° । २ घ. छ. °न्दनं नि° । ३ क. °भासमा° । ४ झ. °भावद° । ५ क. °ष्टान्ताना° । ६ ज. च नि° । ७ क. ज. °दिव द्रव्य° । ८ छ. °क्ते वस्तु° । ९ घ. °त्याभा° । १० ग. झ. °शनयो° । ११ ज. °निमित्ताभा° । १२ ख. °पि जात्याभा° । १३ झ. °त्वतु° । १४ घ. °त्वभा° । १५ छ. °या दर्शय° । १६ क. °र्धं दार्ष्टा° ।

**न निर्गतास्ते विज्ञानाद्द्रव्यत्वाभावयोगतः ।**
**कार्यकारणताभावाद्यतोऽचिन्त्याः सदैव ते ॥ ५२ ॥**

अलातेन समानं सर्वं विज्ञानस्य । सदाऽचलत्वं तु विज्ञानस्य विशेषः । जात्याद्याभासा विज्ञानेऽचले किंकृता इत्याह । कार्यकारणताभावाज्जन्यजनकत्वानुपपत्तेरभावरूपत्वादचिन्त्यास्ते यतः सदैव । यथाऽसत्स्वृज्वाद्याभासेषु ऋज्वादिबुद्धिर्दृष्टाऽलातमात्रे तथाऽसत्स्वेव जात्यादिषु विज्ञानमात्रे जात्यादिबुद्धिर्मृषैवेति समुदायार्थः॥५१॥५२॥

तुल्यत्वं सार्धेनोत्तरश्लोकेन साधयति—**कथमित्यादिना** । न हि तस्मिन्विज्ञाने यथा कथंचिच्चलनं भवति ततोऽन्यस्मात्कस्माच्चिदागत्य जन्माद्याभासास्तत्र भवितुमर्हन्ति तथाप्रथाभावान्न च तस्माद्विज्ञानादचलतयाऽवस्थितादन्यत्राऽऽभासा भवितुमुत्सहन्ते प्रतीत्यभावस्य तुल्यत्वान्नापि तदेव विज्ञानं प्रविशन्ति तस्य केवलस्य तदुपादानत्वानुपगमात् । न च ते विज्ञाने प्रवेष्टुं समर्थास्ततो निर्गन्तुं वा पारयन्ति । तेषामवस्तुत्वादित्यर्थः । कथं तर्हि विज्ञाने प्रथां(था) तेषामित्याशङ्क्य मृषैवेत्याह—**कार्येति** । आभासानां विज्ञानस्य च कार्यकारणताया दुर्वचनत्वादाभासाः सर्वदैव निरूपयितुमशक्यत्वान्मायामयाः सन्तो मिथ्यैव भवन्तीत्यर्थः । सार्धश्लोकतात्पर्यमाह—**अलातेनेति** । तर्हि सक्रियत्वमपि विज्ञानस्य प्रसज्येतेत्याशङ्क्याऽऽह—**सदेति** । यदि विज्ञानमचलमभीष्टं तर्हि तत्र जात्याद्याभासा हेत्वभावान्न स्युरित्याशङ्क्यानन्तिमार्धेन परिहरति—**जात्याद्याभासा इत्यादिना** । यतः सदैवाचिन्त्या अतो मृषैवेति शेषः । संक्षेपतस्तात्पर्यमाह—**यथेत्यादिना** ॥ ५१ ॥ ५२ ॥

**द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चैव हि ।**
**द्रव्यत्वमन्यभावो वा धर्माणां नोपपद्यते ॥ ५३ ॥**

अजमेकमात्मतत्त्वमिति स्थितं तत्र यैरपि कार्यकारणभावः कल्प्यते तेषां द्रव्यं द्रव्यस्यान्यस्यान्यद्धेतुः कारणं स्यान्न तु तस्यैव तत् ।

---

१ क. झ. °ता वि° । २ क. झ. °नात्ते द्रव्य° । ३ ख. घ. ज. °सदृज्वा° । ४ ज. °मात्रात° । ५ घ. °थाऽसत्सत्स्वे° । ६ ज. °दिषु° । ७ झ. °लनं संभव° । छ. °लनं भ° । ८ ग. झ. °स्माचि° । ९ ग. °प्रथनाभा° । १० क. तदैव । ११ छ. न ते । १२ छ. °णतया । १३ झ. °चत्वा° । १४ ख. °ज्येत नेत्याह । १५ घ. ङ. ज. °त्याह । १६ ग. झ. °त्याभा° । १७ च. भावाः कल्प्यन्ते तेषां मतमाह । द्र° । १८ च. °न्यस्य हेतुः ।

**नाप्यद्रव्यं कस्यचित्कारणं स्वतन्त्रं दृष्टं लोके । न च द्रव्यत्वं धर्माणामात्मनामुपपद्यतेऽन्यत्वं वा कुतश्चिद्येनान्यस्य कारणत्वं कार्यत्वं वा प्रतिपद्येत । अतोऽद्रव्यत्वादनन्यत्वाच्च न कस्यचित्कार्यं कारणं वाऽऽत्मेत्यर्थः ॥ ५३ ॥**

यदुक्तं कार्यकारणताभावादिति तदिदानीमुपपादयितुमुपक्रमते—**द्रव्यमिति** । अवयवद्रव्यमवयविद्रव्यस्योपादानम् । अवयवगुणाश्चावयविगुणेषु समानजातीयेष्वसमवायिनो दृष्टाः । न चैवमात्मनो द्रव्यत्वं येन समवायित्वम् । न च तद्रूपाणां क्वचिदसमवायित्वं गुणगुणिभावस्यान्यत्वस्य तस्मिन्दुर्वचनत्वादित्यर्थः । श्लोकाक्षराणि योजयति—**अजमित्यादिना** । अवयवावयविविभागविरहित्वमजत्वम् । एकत्वं गुणगुणिभावशून्यत्वम् । तत्रेत्यात्मतत्त्वं परामृश्यते । तत्र कार्यकारणभावं दूषयितुं सामान्यन्यायमाह—**तेषामिति** । अद्रव्यस्यापि रूपादेस्तन्त्वादिद्वारा पटशौक्ल्यादौ कारणत्वं दृष्टमित्यतो विशिनष्टि—**स्वतन्त्रमिति** । अस्तु तर्हि द्रव्यत्वेनान्यत्वेन चाऽऽत्मनि कार्यकारणत्वं नेत्याह—**न चेति** । न हि तत्र गुणवत्त्वेन द्रव्यत्वं निर्गुणत्वान्नापि समवायित्वेन तथात्वमन्योन्याश्रयत्वप्रसङ्गात् । न च तत्र कुतश्चिदन्यत्वं सर्वस्य सन्मात्रत्वेनैकरूपत्वप्रतिभानात् । अतो न तत्र कारणत्वं कार्यत्वं वा प्रतिपत्तुं शक्यमिति फलितमाह—**अत इति** ॥ ५३ ॥

**एवं न चित्तजा धर्माश्चित्तं वाऽपि न धर्मजम् ।**
**एवं हेतुफलाजातिं प्रविशन्ति मनीषिणः ॥ ५४ ॥**

**एवं यथोक्तेभ्यो हेतुभ्य आत्मविज्ञानस्वरूपमेव चित्तमिति न चित्तजा बाह्यधर्मा नापि बाह्यधर्मजं चित्तम् । विज्ञानस्वरूपाभासमात्रत्वात्सर्वधर्माणाम् । एवं न हेतोः फलं जायते नापि फलाद्धेतुरिति हेतुफलयोरजातिं हेतुफलाजातिं प्रविशन्त्यध्यवस्यन्ति । आत्मनि हेतुफलयोरभावमेव प्रतिपद्यन्ते ब्रह्मविद इत्यर्थः ॥ ५४ ॥**

चिकीर्षितकुम्भसंवेदनसमनन्तरं कुम्भः संभवति । संभूतश्चासौ कर्मतया स्वसंविदं जनयतीति व्यवहारोऽपि नोपपद्यते । कस्यचिदपि विद्वद्दृष्ट्यनुरोधेनानन्यत्वादित्याह—**एवमिति** । यश्च धर्मादेः शरीरादेश्च कार्यकारणभावो विद्वद्दृष्ट्या पुरस्तान्निरस्तः सोऽप्यन्यत्वाभावेन सिध्यतीत्याह—**एवं हेत्विति** । तत्र पूर्वार्धं योजयति—**एवमि-**

---

१ क. छ. °न्यका°। २ च. छ. °त्वं प्र° । ३ च. °पद्यन्ते ततोऽ°। ४ च. छ. °णं चाऽऽत्मे°। ५ ग. झ. °पचङ्क्रम° । ६ ज. °दपि स° । ७ घ. ङ. ज. गुणिगुणभा°। ८ घ. °गराहितत्व° । ९ ख. ग. छ. झ. °हितत्व°। १० झ. °त्वे वाऽऽत्म° ।

त्यादिना। आत्मस्वरूपस्य निर्विकारत्वमद्रव्यत्वमप्रसिद्धत्वमित्यादयो यथोक्ता हेतवः। बाह्या धर्मा घटादयो नाऽऽत्मनः । न च धर्मशब्दितानां जीवानां चित्तशब्दितात्परस्मादात्मनो जन्मेति युक्तम्। तेषां प्रतिबिम्बकल्पानां बिम्बभूतब्रह्ममात्रत्वादित्यभिप्रेत्याऽऽह—विज्ञानेति। उत्तरार्धं योजयति—एवं नेति ॥ ५४ ॥

यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः ।
क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भवः ॥ ५५ ॥

ये पुनर्हेतुफलयोरभिनिविष्टास्तेषां किं स्यादित्युच्यते—धर्माधर्माख्यस्य हेतोरहं कर्ता मम धर्माधर्मौ तत्फलं कालान्तरे क्वचित्प्राणिनिकाये जातो भोक्ष्य इति यावद्धेतुफलयोरावेशो हेतुफलाग्रह आत्मन्यध्यारोपणं तच्चित्ततेत्यर्थः। तावद्धेतुफलयोरुद्भवो[१] धर्माधर्मयोस्तत्फलस्य चानुच्छेदेन प्रवृत्तिरित्यर्थः। यदा पुनर्मन्त्रौषधिवीर्येणेव ग्रहावेशो यथोक्ताद्वैतदर्शनेना[२]विद्योद्भूतहेतुफलावेशोऽपनीतो भवति तदा तस्मिन्क्षीणे नास्ति हेतुफलोद्भवः ॥ ५५ ॥

न फलाद्धेतुर्जायते नापि फलं हेतोरिति तत्त्वदृष्ट्योपदिष्टम् । इदानीं मुमुक्षूणां तदभिनिवेशव्यावृत्त्यर्थं तदभिनिवेशभावाभावयोस्तदुद्भवानुद्भवौ दर्शयति—यावदिति। श्लोकाक्षराण्याकाङ्क्षाप्रदर्शनपुरःसरं विवृणोति—ये पुनरित्यादिना॥५५॥

यावद्धेतुफलावेशः संसारस्तावदायतः ।
क्षीणे हेतुफलावेशे संसारं न प्रपद्यते ॥ ५६ ॥

यदि हेतुफलोद्भवस्तदा को दोष इ[३]त्युच्यते—यावत्सम्यग्दर्शनेन हेतुफलावेशो न निवर्ततेऽक्षीणः संसारस्तावदायतो दीर्घो भवतीत्यर्थः। क्षीणे पुनर्हेतुफलावेशे संसारं न प्रपद्यते कारणाभावात् ॥ ५६ ॥

अभिनिवे[४]शवशाद्धेतुफलोद्भवे किं भवति तदाह—यावदिति । अभिनिवेशनिवृत्त्या तदनुद्भवे वा किं स्यादित्याशङ्क्याऽऽह—क्षीण इति । आकाङ्क्षापूर्वकं पूर्वार्धं योजयति—यदीति। उत्तरार्धं व्याचष्टे—क्षीणे पुनरिति ॥ ५६ ॥

संवृत्या जायते सर्वं शाश्वतं[६] नास्ति तेन वै ।
सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥ ५७ ॥

---

१ च. °दे प्र° । २ च. °नेन वि° । ३ च. इति तत्राऽऽह या° । ४ ख. °वेशाद्धे° । ५ क. °वशवद्धे° । ६ च. घ. °तं तेन नास्ति वै ।

नन्वजादात्मनो[1]ऽन्यन्नास्त्येव तत्कथं हेतुफलयो[2]: संसारस्य चोत्पत्तिविनाशावुच्येते त्वं[3]या। शृणु। संवृत्या संवरणं संवृतिरविद्याविषयो लौकिको व्यवहारस्तया संवृत्या जायते सर्वं तेनाविद्याविषये शाश्वतं नित्यं नास्ति वै। अत उत्पत्ति[4]विनाशलक्षणः संसा[5]र आयत इत्युच्यते। परमार्थसद्भावेन त्वजं सर्वमात्मैव यस्मात्। अतो जा[6]त्यभावादुच्छेदस्तेन नास्ति वै कस्यचिद्धेतुफलादेरित्यर्थः॥ ५७॥

कूटस्थ[7]मद्वितीयमात्मतत्त्वमिच्छ[8]ता कुतो जन्मनाशौ व्यवह्रियेते तत्राऽऽह—**संवृत्येति**। अविद्यया सर्वस्य जायमानत्वे सत्यविद्याविष[9]ये नित्यं नाम नास्त्येवेत्याह—**शाश्वतमिति**। परमार्थ[10]तस्तु सर्वमजं कूटस्थमास्थीयते[11] तेन कल्पनां विना[12] विनाशो नास्त्येव हेतुफलादेरित्याह—**सद्भावेनेति**। पूर्वापरविरोधमाशङ्कते—**नन्विति**। न तावदात्मनो जन्म[13]विनाशौ तस्य कूटस्थत्वान्नापि ततोऽन्यस्य तौ युक्तौ तस्याद्वितीयत्वात्। तथा[14] च हेत्वादेर्वन्ध्यस्य जन्मनाशौ न त्वया वक्तव्यावित्यर्थः। उच्यमाने समाधाने मनःसमाधानमर्थयते—**शृण्विति**। तत्र [15]पूर्वभागाक्षरार्थं कथयति—**संवृत्येत्यादिना**। अविद्याविषये नित्यस्य वस्तुनोऽभावे फलितमाह—**अत इति**। द्वितीयार्धाक्षरार्थमाह—**परमार्थेति**। जा[16]त्यभावो जन्मादिविक्रियाभावस्तमेवोच्छेदाभावे हेतुं कथयति—**तेनेति**। यथा पुरोवर्तिनि भुज[17]गाभावमनुभवन्विवेकी नास्ति भुजंगो रज्जुरेषा कथं वृथैव बिभेषीति भ्रान्तमभिदधाति। भ्रान्तस्तु स्वकीयादपराधादेव भुजंगं परिकल्प्य भीतः सन्पला[18]यते न च तत्र विवेकिनो वचनं मूढदृष्ट्या विरुध्यते। त[19]था परमार्थकूटस्थात्मदर्शनं व्यावहारिकजन्मादिवचनेनाविरुद्धमिति भावः॥ ५७॥

**धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः।**
**जन्म मायोपमं तेषां सा च माया न विद्यते॥५८॥**

येऽप्य[20]ात्मानोऽन्ये च धर्मा जायन्त इति कल्प्यन्ते त इत्येवंप्रका[21]रा यथोक्ता संवृतिर्निर्दिश्यत इति। संवृत्यैव धर्मा जायन्ते न ते[22]

---

१ घ. ङ. ज. °नो ह्येतन्ना°। २ च. °योः संभवः सं°। ३ च. त्वयेति चेच्छृणु। तत्र कारणमित्याह। सं°। ४ घ. °त्तिल°। झ. °त्तिना°। ५ ज. झ. °सारो जाय°। ६ ख. ङ. ज. जात्याद्यभा°। ७ छ. °स्थमा°। ८ घ. °च्छतां कु°। ९ घ. °षयं नि°। १० ग. °र्थस्तु। ११ झ. °ते। क°। १२ घ. °नाशो। १३ ग. छ. झ. °न्मना°। १४ ज. °था हे°। १५ छ. पूर्वार्धाक्ष°। १६ ग. घ. ङ. ज. झ. ज. जात्याद्यभा°। १७ घ. छ. ज. भुजंगा°। १८ ग. छ. झ. °यति न। १९ क. यथा। २० घ. ङ. ज. झ. °प्यात्मनोऽ°। २१ च. °कारा यथोक्ताः संवृत्या निर्दिश्यन्त इ°। २२ च. तु।

तत्त्वतः परमार्थतो जायन्ते । यत्पुनस्तत्संवृत्या जन्म[1] तेषां धर्माणां यथोक्तानां यथा मायया[2] जन्म तथा तन्मायोपमं प्रत्येतव्यम् । माया नाम वस्तु तर्हि । नैवम् । सा च माया न विद्यते, मायेत्यविद्य-मानस्याख्येत्यभिप्रायः ॥ ५८ ॥

संवृत्या जायते सर्वमित्युक्तं तदिदानीं प्रपञ्चयति—धर्मा इति[3] । तत्राऽऽद्यं पादं विभजते—येऽपीति । प्रसिद्धावद्योतकत्वमितिशब्दस्य दर्शयति—त इत्येवंप्रकारा इति । एवंप्रकारत्वमेव[4] स्फोरयति—यथोक्तेति । अनन्तरप्रकृता संवृतिरितिशब्दे[5]-नोक्ता । तथा च संवृत्यैव ते धर्मा जायन्ते न तु तेषां तत्त्वतो जन्मास्तीत्यर्थः । न ते तत्त्वत इत्युक्तं प्रपञ्चयति—परमार्थ इति । संवृत्याऽपि जन्म पारमार्थिकमेवेत्या-शङ्क्य तृतीयपादं योजयति—यत्पुनरिति । प्रत्येतव्यं जन्मेति शेषः । चतुर्थपादार्थ-माकाङ्क्षाद्वारा स्फोरयति[6]—मायेत्यादिना ॥ ९८ ॥

यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः ।
नासौ नित्यो न चोच्छेदी तद्वद्धर्मेषु योजना ॥५९॥

कथं मायोपमं तेषां धर्माणां जन्मेत्याह । यथा मायामयादाम्रादि-बीजाज्जायते तन्मयो मायामयोऽङ्कुरो नासावङ्कुरो नित्यो न चोच्छेदी विनाशी वाऽभूतत्वात्तद्वदेव[7][8] धर्मेषु जन्मनाशादियोजना युक्तिः । न तु परमार्थतो धर्माणां जन्म नाशो वा युज्यत इत्यर्थः ॥ ५९ ॥

जन्म मायोपमं तेषामित्युक्तं तदेव[9] दृष्टान्तावष्टम्भेन साधयति—यथेत्यादिना । श्लोकाक्षराण्याकाङ्क्षां दर्शयन्योजयति—कथमित्यादिना ॥ ५९ ॥

नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा ।
यत्र वर्णा न वर्तन्ते विवेकस्तत्र नोच्यते ॥ ६० ॥

परमार्थतस्त्वात्मस्वजेषु नित्यैकरसविज्ञप्तिमात्रसत्ताकेषु शाश्वतोऽ-शाश्वत इति वा नाभिधा नाभिधानं[10] प्रवर्तत इत्यर्थः । यत्र येषु वर्ण्यन्ते यैरर्थास्ते वर्णाः शब्दा न प्रवर्तन्तेऽभिधातुं[11] प्रकाशयितुं न प्रवर्तन्त इत्यर्थः । इदमेवमिति विवेको विविक्तता[12] तत्र नित्योऽनित्य इति नोच्यते । "यतो वाचो निवर्तन्ते" इति श्रुतेः ॥ ६० ॥

---

१ च. °न्म येषां ते° । २ च. माया । ३ ख. ग. घ. ज. झ. °ति इत्ये° । ४ ग. °मेवं स्फो° । ५ ग. तु । ६ ज. स्फोटयति । ७ क. ख. ग. घ. ङ. छ. °त्वादे° । ८ ख. ग. छ. ज. °देवं ध° । ९ क. तदपि । १० ख. घ. च. °धानं । झ. °धाभि° । ११ घ. ज. °यितुमि° । १२ क. विवेक्तृता ।

यदुक्तं सद्भावेन ह्यजं सर्वमिति तत्प्रपञ्चयति—**नाजेष्विति** । आत्मनि नित्यानित्यकथा नावतरतीत्यत्र हेतुमाह—**यत्रेति** । श्लोकस्य पूर्वार्धं व्याचष्टे—**परमार्थतस्त्विति** । द्वितीयार्धं व्याकरोति—**यत्रेत्यादिना** । तत्रेति प्रकृतेषु धर्मेष्विति यावत् । आत्मसु नित्यानित्यकथाभावे शब्दागोचरत्वं हेतुस्तत्र प्रमाणमाह—**यत इति** ॥ ९० ॥

**यथा स्वप्ने द्वयाभासं चित्तं चलति मायया ।**
**तथा जाग्रद्द्वयाभासं चित्तं चलति मायया ॥ ६१ ॥**
**अद्वयं च द्वयाभासं चित्तं स्वप्ने न संशयः ।**
**अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥ ६२ ॥**

यत्पुनर्वाग्गोचरत्वं परमार्थतोऽद्वयस्य विज्ञानमात्रस्य तन्मनसः स्पन्दनमात्रं न परमार्थत इति । उक्तार्थौ श्लोकौ ॥ ६१ ॥ ६२ ॥

आत्मनः शब्दागोचरत्वे कथमसौ व्याख्यातृभिः शब्दैरेव प्रतिपाद्यतामाचरतीत्याशङ्क्य चित्तस्पन्दनमात्रमविचारसुन्दरं प्रतिपाद्यप्रतिपादकरूपं द्वैतमिति सदृष्टान्तमाह—**यथेति** । स्वप्ने प्रतिपाद्यप्रतिपादकद्वैतस्य चित्तस्पन्दितमात्रत्वेऽपि जागरिते कथं तथा स्यादित्याशङ्क्याऽऽह—**अद्वयं चेति** । पौनरुक्त्यं श्लोकयोराशङ्क्य शङ्कान्तरनिरासार्थत्वान्मैवमिति मन्वानः सन्नाह—**यत्पुनरिति** ॥ ६१ ॥ ६२ ॥

**स्वप्नदृक्प्रचरन्स्वप्ने दिक्षु वै दशसु स्थितान् ।**
**अण्डजान्स्वेदजान्वाऽपि जीवान्पश्यति यान्सदा॥६३॥**

इतश्च वाग्गोचरस्याभावो द्वैतस्य । स्वप्नान्पश्यतीति स्वप्नदृक्प्रचरन्पर्यटन्स्वप्ने स्वप्नस्थाने दिक्षु वै दशसु स्थितान्वर्तमानाञ्जीवान्प्राणिनोऽण्डजान्स्वेदजान्वा यान्सदा पश्यतीति । यद्येवं ततः किम् । उच्यते ॥ ६३ ॥

वाचो गोचरीभूतस्य द्वैतस्यासत्त्वे हेत्वन्तरमाचक्षाणो दृष्टान्तमाचष्टे—**स्वप्नदृगिति** । यान्पश्यति ते न विद्यन्ते पृथगित्युत्तरत्र संबन्धः । श्लोकस्य तात्पर्यमाह—**इतश्चेति** । इतःशब्दार्थमेव स्फुटयन्नक्षराणि व्याचष्टे—**स्वप्नानिति** । न ते विद्यन्त इति पूर्ववदन्वयः । स्वप्नदृशो विषयभूतानां भेदानां तत्र दृश्यमानत्वेऽपि द्वैतभेद-

---

१ छ. °त्मसु नि° । २ क. शब्दगो° । ३ छ. °र्वाचागोच° । ४ च. °स्य तं न स्प° । ५ च. इत्याह ॥ ६१ ॥ ६ झ. °द्यशब्दता° । ७ छ. °स्पन्दितमा° । ८ ग. झ. °शङ्का° । ९ च. °दृक्काऽऽच° । १० ग. °रत्वाभा° । ११ ग. च. वाचा ।

मिथ्यात्वे किमायातमिति पृच्छति—यदीति । उत्तरश्लोकेनोत्तरमाह—उच्यत इति ॥ ६३ ॥

**स्वप्नदृक्चित्तदृश्यास्ते न विद्यन्ते ततः पृथक् ।**
**तथा तद्दृश्यमेवेदं स्वप्नदृक्चित्तमिष्यते ॥ ६४ ॥**

स्वप्नदृशश्चित्तं स्वप्नदृक्चित्तम् । तेन दृश्यास्ते जीवास्ततस्तस्मात्स्वप्नदृक्चित्तात्पृथङ्न विद्यन्ते न सन्तीत्यर्थः । चित्तमेवं ह्यनेकजीवादिभेदाकारेण विकल्प्यते । तथा तदपि स्वप्नदृक्चित्तमिदं तद्दृश्यमेव, तेन स्वप्नदृशा दृश्यं तद्दृश्यम् । अतः स्वप्नदृग्व्यतिरेकेण चित्तं नाम नास्तीत्यर्थः ॥ ६४ ॥

श्लोकाक्षराणि योजयन्कर्मधारयं व्यावर्तयति—स्वप्नेति । जीवादिभेदानां स्वप्ने दृश्यमानानामुक्तानां चित्तात्पृथगसत्त्वं साधयति—चित्तमेवेति । तर्हि द्रष्टा चित्तं चेति द्वयं स्वप्ने स्वीकृतम्, नेत्याह—तथेति । तच्छब्दस्य चित्तविषयत्वं व्यावर्तयति—तेनेति । स्वप्नावस्थस्य चित्तस्य स्वप्नदृग्विषयत्वे फलितमाह—अत इति ॥ ६४ ॥

**चरञ्जागरिते जाग्रद्दिक्षु वै दशसु स्थितान् ।**
**अण्डजान्स्वेदजान्वाऽपि जीवान्पश्यति यान्सदा॥६५॥**
**जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक् ।**
**तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥ ६६ ॥**

जाग्रतो दृश्या जीवास्तच्चित्ताव्यतिरिक्ताश्चित्तेक्षणीयत्वात्स्वप्नदृक्चित्तेक्षणीयजीववत् । तच्च जीवेक्षणात्मकं चित्तं द्रष्टुरव्यतिरिक्तं द्रष्टृदृश्यत्वात्स्वप्नचित्तवत् । उक्तार्थमन्यत् ॥ ६५ ॥ ६६ ॥

दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति—चरन्नित्यादिना । जाग्रदवस्थो हि पुरुषो याञ्जीवान्पश्यतीत्यत्र जीवशब्देन कार्यकारणसंघाता गृह्यन्ते चेतनानां दृश्यत्वाभावादिति द्रष्टव्यम् । श्लोकद्वये विवक्षितमनुमानद्वयमारचयति—जाग्रत इति । अक्षरव्याख्यानं तु दृष्टान्तव्याख्यानेनैव स्पष्टत्वान्न पृथगपेक्षितमिति विवक्षित्वाऽऽह—उक्तार्थमिति ॥ ६५ ॥ ६६ ॥

---

१ च. झ. दृश्याः स्वप्नदृक्चित्तदृश्या° । २ क. °व तर्हि न जी° । ३ झ. °कल्पते । ४ ख. °त्तमिति । ५ घ. °प्ने प्राक्° । ङ. ज. °प्ने प्रक्° । ६ च. चित्ते । ७ च. °त्तं तद्द्रष्टुर्व्यति° । ८ ख. °मित्याह ॥ ६५ ॥

**उभे ह्यन्योन्यदृश्ये[1] ते किं तदस्तीति नोच्यते[2]।**
**लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते ॥ ६७ ॥**

जीवचित्ते उभे चित्तचैत्ये ते अन्योन्यदृश्ये इतरेतरगम्ये । जीवादिविषयापेक्षं हि चित्तं नाम भवति । चित्तापेक्षं हि जीवादि दृश्यम् । अतस्ते अन्योन्यदृश्ये। तस्मान्न किंचिदस्तीति चोच्यते चित्तं वा चित्तेक्षणीयं[3] वा[4] किं तदस्तीति विवेकिनोच्यते । न हि स्वप्ने हस्ती हस्तिचित्तं वा विद्यते तथेहापि विवेकिनामित्यभिप्रायः[5] । कथम् । लक्षणाशून्यं लक्ष्यतेऽनयेति लक्षणा प्रमाणं प्रमाणशून्यमुभयं चित्तं[6] चैत्यं द्वयं यतस्तन्मतेनैव तच्चित्ततयै[7]व तद्गृह्यते[8] । न हि घटमतिं प्रत्याख्याय घटो गृह्यते नापि घटं प्रत्याख्याय घटमतिः । न हि तत्र प्रमाणप्रमेयभेदः शक्यते कल्पयितुमित्यभिप्रायः ॥ ६७ ॥

दृश्यदर्शनव्यतिरेकग्राहकप्रमाणप्रतिहतं हेतुद्वयमित्याशङ्क्याऽऽह—उभे हीति[9] । दृश्यदर्शने परस्परापेक्षसिद्धिके दृश्ये सिद्धे तदवाच्छिन्नं दर्शनं सिध्यति तस्[10]यं च सिद्धौ तदवच्छिन्नं दृश्यं सिध्यतीत्यन्योन्याश्रयान्न दृश्यं दर्शनं वा सिध्[11]यतीत्यतो विभागावगाहिप्रमाणाभावान्न तद्बाधो हेतुद्वयस्येत्यर्थः । किं च संभावनायां प्रमाणप्रवृत्तिर्वक्तव्या न[12] च दृश्यदर्शनयोरन्यतरस्यापि नैरपेक्ष्येण संभावना[13] भवत्यन्योन्याश्रयदोषात् । तथा च परस्परपुरस्कारेण[14] सिध्येदु[15]भ[16]यं कल्पितमेव स्यादिति मत्वाऽऽह—किं तदिति । तद्दृश्यं दर्शनं वा किमस्तीति पृष्टे विवेकिना नास्तीत्येवोच्यते प्रागुक्तदोषादित्यर्थः । किं च प्रामाणिकस्यैव प्रामाणिको भेदः संभवति। न च दृश्यदर्शनयोः स्वरूपे प्रमाणमस्तीत्याह—लक्षणेति । कथं तर्हि प्रमाणप्रमेय[17]विभागो वादिभिर्गृह्यते तच्चित्ततादोषेणेत्याह—तन्मतेनेति । तत्र प्रथमं पादं विभजते—जीवेति । ते जीवचित्ते इति संबन्धः । अन्योन्यदृश्यत्वमितरेत[18]रग्राह्यत्वं तदेव स्पष्टयति—जीवादिति । द्वि[19]तीयपादं व्याचष्टे—तस्मादिति । तदेव स्फुटयति—चित्तं वेति । किं तदस्तीति पृष्टे सति न किंचिदस्तीत्युच्यते विवेकिनेति योजना । उक्तमेवार्थं दृष्टान्तेन विवृ-

---

१ श्र. °श्येत किं । २ क. ग. च. छ. °ति चोच्य° । ३ च. °यं त° । ४ ख. घ. ङ. ज. वा । नाकिंचिद° । ५ च. °मित्याशयः । ६ घ. चित्तचैत्यं । ७ घ. °च्चित्तं तथैव । ८ छ. °व गृह्यते तन्न हि । ९ ख. ग. झ. °ति । ते हि दृ° । १० ग. झ. °स्य सि° । ११ ग. झ. °ध्यत्य° । १२ क. न दृ° । १३ ग. झ. °ना समस्यान्यो° । १४ क. °ण विद्येत यदु° । १५ ग. झ. सिध्यदु° । १६ छ. °भयोः क° । १७ छ. °यभेदो वा° । १८ ग. छ. झ. °तरावगाह्य° । १९ छ. °तीयं पादं विभजते त° ।

णोति—**न हीति**। इहेति जागरितोक्तिः। द्वितीयार्धं[1] व्याचिख्यासुतया पृच्छति—**कथमिति**। तदेवावतार्य[3] व्याकरोति—**लक्षणेत्यादिना**। यतस्ततो न तद्भेदस्य[4] प्रामाणिकत्वमिति शेषः। कथं तर्हि लौकिकानां परीक्षकाणां च प्रमाणप्रमेयविभाग-प्रवृत्तिरित्याशङ्क्य चतुर्थपादार्थमाह—**तन्मतेनेति**। तदेव प्रपञ्चयति—**न हीति**। घटे किं प्रमाणमित्युक्ते ज्ञानमित्यनुत्तरमतिप्रसङ्गान्नापि घटज्ञानमन्योन्याश्रयप्रसङ्गा-दतो न घटतज्ज्ञानयोर्मानमेयभावः संभवतीत्यर्थः॥ ६७॥

**यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च।**
**तथा जीवा अमी सर्वे[5] भवन्ति न भवन्ति च॥६८॥**
**यथा मायामयो जीवो जायते म्रियतेऽपि च[6]।**
**तथा जीवा अमी सर्वे[7] भवन्ति न भवन्ति च॥६९॥**
**यथा निर्मितको जीवो जायते म्रियतेऽपि वा[8]।**
**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च॥७०॥**

मायामयो मायाविना[9] यः कृतो निर्मितको मन्त्रौषध्यादिभिर्निष्पा-दितः। स्वप्नमायानिर्मितका[10] अण्डजादयो जीवा यथा जायन्ते म्रियन्ते च तथा मनुष्यादिलक्षणा अविद्यमाना एव चित्तविकल्पनामात्रा इत्यर्थः॥ ६८॥ ६९॥ ७०॥

दृश्यानामण्डजादीनां दर्शनातिरिक्तानामसत्त्वानुमानस्य भेदग्राहकप्रमाणबाधं परि-हृत्य दर्शनातिरेकेण तेषामसत्त्वे जन्मादिप्रत्ययबाधः स्यादित्याशङ्क्य परिहरति—**यथेत्यादिना**। मायामयस्य निर्मितकस्य च जीवस्य विशेषं बुभुत्समानं प्रत्याह—**मायेति**। संविदतिरेकेणाण्डजादीनां परमार्थतः सत्त्वाभावानुमानस्य[11] न जन्मादिप्रति-भासबाधः। सत्त्वाभावेऽपि स्वप्नादिषु जन्मादिविकल्पबाहुल्योपलम्भादिति श्लोकत्रयस्य तात्पर्यमाह—**स्वप्नेत्यादिना**॥ ६८॥ ६९॥ ७०॥

**न कश्चिज्जायते जीवः संभवोऽस्य न विद्यते।**
**एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते॥ ७१॥**

---

१ ख. ग. झ. °यार्धव्याचिख्यासया। घ. ङ. ज. °यार्धं व्याचिख्यासया। २ ग. झ. तदव°। ३ घ. °देव तात्पर्यं व्या°। ४ ग. छ. झ. तत्र भेद°। ५ ख. घ. ङ. ज. °र्वे न भवन्ति भ°। ६ च. छ. वा। ७ ख. घ. ङ. ज. °र्वे न भवन्ति भ°। ८ घ. च। ९ च. °ना कृतो यो नि°। १० च. °निमित्तका। ११ ज. °स्य ज°।

व्यवहारसत्यविषये जीवानां जन्ममरणादिः स्वप्नादिजीववदित्युक्तम्। उत्तमं तु परमार्थसत्यं न कश्चिज्जायते जीव इति। उक्तार्थमन्यत्॥ ७१॥

यस्तु जन्मादि सत्यमिति मन्यते तं प्रति प्रागुक्तं स्मारयति—न कश्चिदिति। वृत्तानुवादपूर्वकं श्लोकतात्पर्यमाह—व्यवहारेति। अक्षराणि न व्याख्येयानि व्याख्यातत्वादित्याह—उक्तार्थमिति॥ ७१॥

**चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वयम्।**
**चित्तं निर्विषयं नित्यमसङ्गं तेन कीर्तितम्॥ ७२॥**

सर्वं ग्राह्यग्राहकवच्चित्तस्पन्दितमेव द्वयं चित्तं परमार्थत आत्मैवेति निर्विषयं तेन निर्विषयत्वेन नित्यमसङ्गं कीर्तितम्। "असङ्गो ह्ययं पुरुषः" इति श्रुतेः। सविषयस्य हि विषये सङ्गः। निर्विषयत्वाच्चित्तमसङ्गमित्यर्थः॥ ७२॥

संवेदनस्य कल्पितदृश्योपहितरूपेण दृश्यत्वान्न द्रष्टुर्व्यतिरेकेण सत्त्वमिति स्वप्नदृष्टान्तेनोक्तमिदानीं तत्त्वतः संवेदनस्य विषयसंबन्धाभावादात्मैव संवेदनमित्याह—चित्तेति। अक्षरार्थं कथयति—सर्वमित्यादिना। निर्विषयत्वेनासङ्गत्वे सिद्धे श्रुतिमपि संवादयति—असङ्गो हीति। श्रुतियुक्तिसिद्धमसङ्गत्वं साधयति—सविषयस्येति॥ ७२॥

**योऽस्ति कल्पितसंवृत्या परमार्थेन नास्त्यसौ।**
**परतन्त्राभिसंवृत्या स्यान्नास्ति परमार्थतः॥ ७३॥**

ननु निर्विषयत्वेन चेदसङ्गत्वं चित्तस्य न निःसङ्गता भवति यस्माच्छास्ता शास्त्रं शिष्यश्चेत्येवमादेर्विषयस्य विद्यमानत्वात्। नैष दोषः। कस्मात्। यः पदार्थः शास्त्रादिर्विद्यते स कल्पितसंवृत्या कल्पिता च सा परमार्थप्रतिपत्त्युपायत्वेन संवृतिश्च सा तया योऽस्ति परमार्थेन नास्त्यसौ न विद्यते। ज्ञाते द्वैतं न विद्यत इत्युक्तम्। यश्च परतन्त्राभिसंवृत्या परशास्त्रव्यवहारेण स्यात्पदार्थः स परमार्थतो निरूप्यमाणो नास्त्येव। तेन युक्तमुक्तमसङ्गं तेन कीर्तितमिति॥ ७३॥

---

१ घ. °हारेऽस°। २ ख. °सत्ये वि°। ३ क. °षयजी°। ४ च. झ. इत्याद्युक्ता°। ५ ग. छ. ज. °तद्दृष्टयोपात्तरू°। झ. °तद्दृश्योपात्तरू°। ६ क. °न्न दृष्टव्यति°। ७ छ. °ष्टान्तत्वेनो°। ८ ख. ज. °क्तम°।

निर्विषयत्वेन चित्तस्यासङ्गत्वं संगीतं तदसंगतं शास्त्रादेर्विषयस्य सत्त्वादित्याशङ्क्याऽऽह—**योऽस्तीति**। ननु परमार्थतो वैशेषिकाः षट्पदार्थान्द्रव्यादिसमवायान्तानातिष्ठन्ते तथा च चित्तस्य कथमसङ्गत्वं तत्राऽऽह—**परेति**। वैशेषिकपारिभाषिकव्यवहारानुरोधेन पदार्थो यो द्रव्यादिः समवायान्तः स्यान्न स परमार्थतोऽस्ति किं तु संवृत्या प्रतिभाति तस्मादविरुद्धमसङ्गत्वमित्यर्थः। व्यावर्त्यं चोद्यमुत्थापयति—**नन्विति**। तत्र यस्मादिति सामान्येनोक्तं हेतुं विशेषतो व्यनक्ति—**शास्त्रेति**। आदिशब्देन प्रमाता प्रमाणं प्रमेयमित्यादि गृह्यते। असङ्गत्वाक्षेपं परिहरति—**नैष दोष इति**। तत्र निर्विषयत्वहेतुं प्रश्नपूर्वकं पूर्वार्धयोजनया साधयति—**कस्मादित्यादिना**। परमार्थतो द्वैतस्यासत्त्वे वाक्योपक्रममनुगुणमादर्शयति—**ज्ञात इति**। द्वितीयार्धं योजयति—**यश्चेति**। न हि द्रव्यस्य लक्षणं गुणादिपञ्चकस्थं च ततो व्यावर्तकप्रातिस्विकलक्षणप्रतिपत्तिमन्तरेण प्रकल्प्यते। तथा च तल्लक्षणतस्तत्प्रतिपत्तौ तदितरप्रतिपत्तिः। तत्प्रतिपत्तौ च तल्लक्षणतस्तद्व्यावृत्ततत्तत्प्रतिपत्तिरिति परस्पराश्रयान्न किंचिदपि वस्तुतः सिध्येदित्यर्थः। वस्तुतो निर्विषयस्यैव सिद्धत्वादसङ्गत्वं चित्तस्य प्रागुक्तं संगतमेवेत्युपसंहरति—**तेनेति** ॥ ७३ ॥

**अजः कल्पितसंवृत्या परमार्थेन नाप्यजः।**
**परतन्त्राभिनिष्पत्त्या संवृत्या जायते तु सः ॥ ७४ ॥**

**ननु शास्त्रादीनां संवृतित्वेऽज इतीयमपि कल्पना संवृतिः स्यात्। सत्यमेवम्। शास्त्रादिकल्पितसंवृत्त्यैवाज इत्युच्यते। परमार्थेन नाप्यजः। यस्मात्परतन्त्राभिनिष्पत्त्या परशास्त्रसिद्धिमपेक्ष्य योऽज इत्युक्तः स संवृत्या जायते। अतोऽज इतीयमपि कल्पना परमार्थविषये नैव क्रमत इत्यर्थः ॥ ७४ ॥**

शास्त्रादिभेदकल्पनायाः संवृतिसिद्धत्वे तदधीनात्मन्यजत्वकल्पनाऽपि संवृतिसिद्धैव स्यादित्याशङ्क्याङ्गी करोति—**अज इति**। कल्पितमात्मन्यजत्वमित्यत्र हेतुमाह—**परतन्त्रेति**। परिणामवादप्रसिद्धजन्मना भ्रान्त्यैवाऽऽत्मा जायते जन्मनश्च

---

१ ख. °ह । प° । २ क. ख. घ. ङ. छ. °न्न प° । ३ ग. °सत्त्वमि° । ४ ख. °यत्वं हे° । ५ झ. °र्वार्धं यो° । ६ ज. °स्य त° । ७ घ. °र्तकं प्रा° । ८ घ. ङ. °कल्प्यन्ते । त° । ९ क. ख. ङ. ज. तत्तल्ल° । १० छ. °तरेतर° । ११ घ. ङ. ज. तत्तल्ल° । १२ घ. °स्तत्तद्व्या° । १३ ग. °स्यैवं सि° । १४ क. °तन्त्रोऽभि° । १५ घ. ङ. च. छ. °वृत्तित्वेऽ° । १६ ङ. छ. ज. झ. °वृत्तिः स्या° । १७ ख. ङ. ज. °स्त्रप्रसि° । १८ क. °सिद्धम° । १९ ग. झ. °दविक° । २० ग. घ. छ. ज. झ. °वृत्तिसि° । २१ ग. घ. छ. ज. झ. °वृत्तिसि° ।

विभ्रमत्वे तन्निषेधस्याजत्वस्यापि तथात्वं युक्तमित्यर्थः । श्लोकव्यावर्त्य[1]माशङ्क्यामाह—नन्विति । शा[2]स्त्रादिभेदस्य कल्पितत्वे तत्प्रयुक्तमात्मन्यजत्वमपि कल्पितं स्यादित्यर्थः । किमजोऽयमात्मेति व्यवहारस्य कल्पितत्वं किं वा तदुपलक्षित[3]स्य[4] रूपस्येति विकल्प्याऽऽद्यमङ्गी करोति—सत्यमिति । अजोऽयमित्यभिधानस्य संवृ[5]तिप्रयुक्तत्वात्तद्व्यवहारस्य कल्पितत्वमि[6]ष्टमित्यर्थः । कैवल्यावस्थायामजोऽयमित्यभिधानाभावमभ्युपेत्य व्यावर्त्यं दर्शयति—परमार्थेनेति । आत्मन्यजत्वव्यवहारस्य कल्पितत्वे द्वितीयार्धव्याख्यानेन हेतुमाह—यस्मादिति । परेषां परिणामवादिनां शास्त्रे या परिणामप्रसिद्धिस्तामपेक्ष्य तन्निषेधेन योऽज इत्यात्[7]मोक्तः स संवृत्यैव यतो जायतेऽतश्च प्रति[8]योगिनो जन्मनः संवृतिसिद्धत्वात्तन्निषेधरूपमजत्वमपि तादृगेवेत्यर्थः । अजत्वादिव्यवहारोपलक्षित[9]स्वरूपस्याकल्पितत्वम् । तस्य कल्पनाधिष्ठानत्वात् । न च कल्पितस्य शास्त्रादेरक[10]ल्पितेन प्रमितिहेतुत्वं प्रतिबिम्बा[11]दौ बिम्बादिप्रमितिहेतुत्वस्य संप्रतिपन्नत्वादिति द्रष्टव्यम् ॥ ७४ ॥

**अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते ।**
**द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते ॥ ७५ ॥**

यस्माद[12]सद्विषयस्तस्माद[13]सत्यभूते द्वैतेऽभिनिवेशोऽस्ति केवलमभिनिवेश आग्रहमात्रम् । द्वयं तत्र न विद्यते । मिथ्याभिनिवेशमात्रं च जन्मनः कारणं यस्मात्तस्माद्द्वयाभावं बुद्ध्वा निर्निमित्तो निवृत्तमिथ्याद्वयाभिनिवेशो यः स न जायते ॥ ७५ ॥

ननु ज्ञानस्य कल्पितशास्त्रादिजन्यत्वे मिथ्यात्वान्नापुनरावृत्तिफलसाधनत्वं तत्राऽऽह—अभूतेति । यदि द्वितीयः संसारः सत्यः स्यात्तदा[14] तन्निवृ[15][16]त्त्यर्थे साधनमपि वस्तुभूतमभिधीयेत मिथ्याभिनिवेशमात्रस्य तु मिथ्योपायजन्येनापि ज्ञानेन वस्तुनिष्ठेन निवृत्तिः सिध्यतीति श्लोकार्थं कथयति—यस्मादित्यादिना ॥ ७५ ॥

**यदा न लभते हेतूनुत्तमाधममध्यमान् ।**
**तदा न जायते चित्तं हेत्वभावे फलं कुतः ॥ ७६ ॥**

जात्याश्रमविहिता आशीर्वर्जितैरनुष्ठीयमानां[17] धर्मा देवत्वादिप्राप्तिहेतव

---

१ घ. ङ. ज. °र्त्याश° । २ ग. झ. शास्त्रभे° । ३ ग. छ. झ. °तस्वरू° । ४ ख. ङ ज. °स्य स्वरू° । ५ ग. घ. छ. ज. झ. °वृत्तिप्र° । ६ छ. °मित्य° । ७ ग. झ. °त्मोक्तस्तत्संवृ° । ८ ग. घ. ङ. छ. ज. झ. °वृत्तिसि° । ९ ग. झ. °तस्या° । १० ज. °ल्पितत्वेन । ११ क. °म्बादि° । १२ ख च. छ. झ. °सद्द्वैतविष° । १३ घ. ङ. ज. °सद्भूते । १४ झ. °दा तन्निन्दा त° । १५ ग. छ. झ. °वृत्तये सा° । १६ घ. ङ. ज. °त्यर्थे सा° । १७ क. °नाद्धर्माद्देव° ।

उत्तमाः[1] केवलाश्च धर्माः[2]। अधर्मव्यामिश्रा मनुष्यत्वादिप्राप्त्यर्था मध्यमाः। तिर्यगादिप्राप्तिनिमित्ता अधर्मलक्षणाः प्रवृत्तिविशेषाश्चाधमाः[3]। तानुत्तममध्यमाधमानविद्यापरिकल्पितानेकमेवाद्वितीयमात्मतत्त्वं सर्व[4]-कल्पनावर्जितं जानन्न लभते न पश्यति यथा बालैर्दृश्यमानं गगने[5] मलं विवेकी न पश्यति तद्वत्तदा न जायते नोत्पद्यते चित्तं देवाद्याकारैरुत्तमाधममध्यमफलरूपेण। न ह्यसति हेतौ फलमुत्पद्यते बीजाद्यभाव इव सस्यादि[6]॥ ७६॥

निर्निमित्तो न जायत इत्युक्तं तदेतत्प्रपञ्चयति—यदेति। उत्तमान्हेतून्विभजते—जातीति। आशीर्वर्जितैः फलतृष्णारहितैरधिकारिभिरिति यावत्। देवत्वादित्यादिशब्देनोत्कृष्टं[7] जन्म गृह्यते। केवलत्वं धर्माणां प्राधान्यम्। मनुष्यत्वादीत्यादिशब्देन मध्यमयोनयो गृह्यन्ते। तिर्यगादीत्यादिशब्देनाधमं जन्म संगृह्यते[8]। वाक्यीयज्ञानाद-[9]ज्ञाननिवृत्तौ तन्निवृत्त्यर्थं विशिनष्टि—अविद्येति। अविदुषां प्रतीयमाना हेतवो विदुषां न प्रतिभान्तीत्येतद्दृष्टान्तेन स्फुटयति—यथेति। उक्तेऽर्थे हेतुत्वेन चतुर्थपादं व्याचष्टे—न हीति॥ ७६॥

**अनिमित्तस्य चित्तस्य याऽनुत्पत्तिः समाऽद्वया।**
**अजातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः॥ ७७॥**

हेत्वभावे चित्तं नोत्पद्यत इति ह्युक्तम्। सा पुनरनुत्पत्तिश्चित्तस्य कीदृशीत्युच्यते। परमार्थदर्शनेन निरस्तधर्माधर्माख्योत्पत्तिनिमित्तस्यानिमित्तस्य चित्तस्येति या मोक्षाख्याऽनुत्पत्तिः सा सर्वदा सर्वावस्थासु समा निर्विशेषाऽद्वया च। पूर्वमप्यजातस्यैवानुत्पन्नस्य चित्तस्य सर्वस्याद्वयस्येत्यर्थः। यस्मात्प्रागपि विज्ञानाच्चित्तदृश्यं[10] तद्द्वयं जन्म च तस्मादजातस्य सर्वस्य सर्वदा चित्तस्य समाऽद्वयैवानुत्पत्तिर्न[11][12] पुनः कदाचिद्भवति कदाचिद्वा न भवति[13]। सर्वदैकरूपैवेत्यर्थः[14]॥ ७७॥

तदा न जायते चित्तमिति कालपरिच्छेदप्रतीतेरागन्तुकत्वमाशङ्क्य परिहरति—अनिमित्तस्येति। चित्तस्य हि निमित्तवर्जितस्य नित्यसिद्धस्य या सर्वदाऽनुत्पत्तिः सा निर्विशेषाऽद्वितीया चेत्यत्र हेतुमाह—अजातस्येति। सर्वस्य द्वैतस्य चित्तदृ-

१ छ. °त्तमा इत्यर्थः। के°। २ झ. °ला ध°। ३ क. छ. °घर्मा ध°। ४ च. सर्वे क°। ५ ख. °गनतलम°। ६ क. च. झ. °स्यादिः॥ ७६॥ ७ क. ख. झ. °त्कृष्टज°। ८ क. छ. °लत्वेन ध°। ९ ख. ज. वाक्यार्थज्ञा°। १० घ. ज. °श्यं न द्वयं। ११ छ. °द्वया चानु°। १२ ज. °नुपपत्ति°। १३ ख. घ. ङ. ज. °वतीति। १४ छ. °रूपेत्य°।

श्यत्वेन मिथ्यात्वान्नित्यसिद्धस्य परिपूर्णस्य चित्ताख्यस्य स्फुरणस्य जन्मायोगात्तदनुत्पत्तिरुक्तलक्षणा युक्तेत्यर्थः । उक्तमनूद्याऽऽकाङ्क्षापूर्वकं श्लोकमवतार्य व्याकरोति—**हेत्वभाव इत्यादिना** । यथा रूप्यकल्पनाकालेऽपि शुक्तेररूप्यत्वं स्वाभाविकं तथा जन्मकल्पनाकालेऽपि संविदो निर्विशेषाद्वितीयब्रह्मता स्वाभाविकी । जन्मभ्रमनिवृत्त्यपेक्षया तु तदा न जायत इत्युक्तमित्याह—**सर्वदेति** । न केवलं मोक्षावस्थस्यैव चैतन्यस्याजत्वं किं तु घटाद्युपरक्तस्यापीत्यभिप्रेत्याऽऽह—**सर्वावस्थास्विति** । सर्वस्यैव चित्तप्रतिबिम्बस्य बिम्बकल्पब्रह्मरूपत्वादिति हेतुमभिप्रेत्याऽऽह—**अद्वया चेति** । तृतीयपादार्थं कथयति—**पूर्वमपीति** । तत्र हेतुमाह—**यस्मादिति** । तस्माद्रज्जुसर्पवद्द्वैतस्य जन्मनश्च दृश्यत्वाद्वस्तुतोऽसत्त्वादिति यावत् ॥ ७७ ॥

**बुध्द्वाऽनिमित्ततां सत्यां हेतुं पृथगनाप्नुवन् ।**
**वीतशोकं तथा काममभयं पदमश्नुते ॥ ७८ ॥**

**यथोक्तेन न्यायेन जन्मनिमित्तस्य द्वयस्याभावादनिमित्ततां च सत्यां परमार्थरूपां बुद्ध्वा हेतुं धर्मादिकारणं देवादियोनिप्राप्तये पृथगनाप्नुवन्ननुपाददानस्त्यक्तबाह्यैषणः सन्कामशोकादिवर्जितमविद्यादिरहितमभयं पदमश्नुते पुनर्न जायत इत्यर्थः ॥ ७८ ॥**

द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायत इत्युक्तं तदिदानीं प्रपञ्चयति—**बुद्ध्वेति** । द्वैताभावोपलक्षितां सत्तामनाद्यनन्तां परमार्थभूतां प्रतिपद्य देवादियोनिप्राप्तौ धर्मादिहेतुमसांकर्येणाननुतिष्ठन्यदा विद्वानवतिष्ठते तदा सर्वसंसारैककारणरहितं पदमश्नुवानो न पुनः शरीरं गृह्णातीत्यर्थः । श्लोकं व्याचष्टे—**यथोक्तेनेति** । दृश्यत्वादिना हेतुना द्वैतस्य रज्जुसर्पादिवदेव कल्पितत्वं यथोक्तो न्यायस्तेन चैतन्यस्य जन्मनि यद्द्वयं निमित्तं तस्याभावतामभावोपलक्षितां सत्तां निमित्ताभावादेवानाद्यनन्तां तस्मादेव सत्यां बुद्ध्वेति योजना । पृथगिति देवतादिप्रकृष्टजन्मप्राप्तये धर्मं मनुष्यत्वप्राप्तये धर्माधर्मौ तिर्यगाद्यधमयोनिप्राप्तये चाधर्ममसांकर्येणाननुतिष्ठन्निति यावत् । प्रकृतस्य ज्ञानवतो धर्माद्यनुष्ठानायोगे हेतुं सूचयति—**त्यक्तेति** । कार्यभूतसर्वानर्थराहित्यमुक्त्वा पुनरभयमित्यस्यार्थमाह—**अविद्येति** ॥ ७८ ॥

---

१ छ. °गाद° । २ छ. रूपक° । ३ ज °दोऽपि नि° । ४ झ. °वस्थैव । ५ छ. °बिम्बितस्य । ६ छ. °तोऽभावादि° । ७ घ. °थोक्तन्या° । ८ क. द्वयाभा° । ९ छ. °पादा° । १० च. झ. °ते न पुनर्जाय° । ११ झ. सर्वकारणसंसार° । १२ ख. °रकर° । १३ ख. °वता प्र° । १४ ख. °ष्यत्वादिप्रा° । ग. झ. °ष्यप्रा° । १५ ग. घ. °योगाद्धेतुं ।

अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते ।
वस्त्वभावं स बुद्ध्वैव निःसङ्गं विनिवर्तते ॥ ७९ ॥

यस्मादभूताभिनिवेशादसति द्वयेऽद्वयास्तित्वनिश्चयोऽभूताभिनिवेशस्तस्मादविद्याव्यामोहरूपाद्धि सदृशे तदनुरूपे[1] तच्चित्तं प्रवर्तते । तस्य द्वयस्य वस्तुनोऽभावं यदा बुद्धवांस्तदा तस्मान्निःसङ्गं[2] निरपेक्षं सद्विनिवर्ततेऽभूताभिनिवेशविषयात् ॥ ७९ ॥

यथोक्तपदप्राप्तिः सदाऽस्तीत्याशङ्क्याऽऽह—अभूतेति । व्यभिचारित्वादिहेतुभिरद्वयात्मदर्शनेन वा साध्यसाधनात्मनो द्वैतस्य वस्तुनोऽभावं यदा पुमान्बुद्धवांस्तदा वस्त्वभावं पुरुषो बुद्ध्वैव[3] निःसङ्गं चित्तं यथा पुनर्न प्रवर्तते तथा तन्निवृत्तिमनुवृत्तो[4] भवतीत्यर्थः । अक्षराणि[5] विभजते—यस्मादित्यादिना । यस्मादभूताभिनिवेशात्तदनुरूपे चित्तं प्रवर्तते तस्मान्निःसङ्गं[6] निवर्तत इति संबन्धः । अभूताभिनिवेशमेव विशदयति—असतीति । अभिनिवेशस्याविद्याव्यामोहरूपत्वमन्वयव्यतिरेकासिद्धमिति[7] वक्तुं हीत्युक्तम् । तदनुरूपे इत्यत्र तच्छब्देनाभिनिवेशो गृह्यते । तस्येति । अभिनिवेशविषयस्येत्यर्थः ॥ ७९ ॥

निवृत्तस्याप्रवृत्तस्य निश्चला[9] हि तदा स्थितिः ।
विषयः स हि बुद्धानां तत्साम्यमजमद्वयम्[10] ॥८०॥

निवृत्तस्य द्वैतविषयाद्विषयान्तरे[11] चाप्रवृत्तस्याभावदर्शनेन चित्तस्य निश्चला चलनवर्जिता[12][13] ब्रह्मस्वरूपैव तदा स्थितिर्यैषा ब्रह्मस्वरूपा स्थितिश्चित्तस्याद्वयविज्ञानैकरसघनलक्षणा । स[14] हि यस्माद्विषयो[15] गोचरः परमार्थदर्शिनां बुद्धानां तस्मात्तत्साम्यं परं निर्विशेषमजमद्वयं च ॥ ८० ॥

अभयं पदमश्नुत इत्यत्र हेतुमाह—निवृत्तस्येति । विद्वदनुभवैकगम्यत्वादशेषकल्पनातीतत्वाच्च सिद्धं मोक्षस्याभयादिरूपत्वमित्याह—विषय इति । अक्षरार्थं कथयति—निवृत्तस्येत्यादिना ॥ ८० ॥

---

१ घ. ज. °पे चित्तं । २ ख. घ. ङ. ज. तस्मिन्निः° । ३ झ. बुद्ध्यैव । ४ छ. °नुनिवृ° । ५ छ. °रार्थं वि° । ६ ग. छ. झ. °ङ्गं विनि° । ७ ग. झ. °द्यामो° । ८ ख. घ. ङ. °पभित्य° । ९ घ. निश्चलं । १० क. तत्स्वात्म्यम° । ११ ख. च. झ. °रे वाऽप्र° । १२ घ. ङ. ज. °लव° । १३ क. °ता स्व° । १४ च. सा । १५ क. °षयगो° । च. °षयागो° ।

**अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम् ।**
**सकृद्विभातो ह्येवैष धर्मो धातुस्वभावतः ॥ ८१ ॥**

पुनरपि कीदृशश्चासौ बुद्धानां विषय इत्याह—स्वयमेव तत्प्रभातं भवति नाऽऽदित्याद्यपेक्षं स्वयंज्योतिःस्वभावमित्यर्थः । सकृद्विभातः सदैव विभात इत्येतत् । एष एवंलक्षण आत्माख्यो धर्मो धातुस्वभावतो वस्तुस्वभावत इत्यर्थः ॥ ८१ ॥

यो मोक्षो विदुषां विषयो दर्शितस्तमेव पुनर्विशिनष्टि—**अजमिति** । स्वयंप्रभातत्वे हेतुमाह—**सकृदिति** । कल्पितस्य सर्वस्य धारणाद्धर्मो नासौ कथमपि परतन्त्रो भवितुमर्हत्यनवस्थानादतः स्वयंज्योतिरित्याह—**धर्म इति** । किं च धीयते निधीयते सर्वं निक्षिप्यते सुषुप्तादावस्मिन्निति धातुरात्मोच्यते । तथा च सर्वस्य ज्ञानसाधनस्योपसंहारेऽपि सुषुप्तादौ साक्षितयाऽऽत्मनः सिद्धेः स्वयंज्योतिष्ट्वमेष्टव्यमित्याह—**धातुरिति** । किं चाऽऽत्मत्वादेवाऽऽत्मनः स्वयंज्योतिष्ट्वमन्यथा घटवदनात्मत्वप्रसङ्गादित्याह—**स्वभावत इति** । आकाङ्क्षापूर्वकं श्लोकमवतार्य तदक्षराणि योजयति—**पुनरपीत्यादिना** । धातुस्वभावत इत्येकं पदं गृहीत्वा व्याचष्टे—**वस्त्विति** । विवक्षितार्थस्तु पूर्वस्मान्नातिरिच्यते ॥ ८१ ॥

**सुखमाव्रियते नित्यं दुःखं विव्रियते सदा ।**
**यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥ ८२ ॥**

एवमुच्यमानमपि[10] परमार्थतत्त्वं[11] कस्माल्लौकिकैर्न गृह्यत इत्युच्यते—यस्माद्यस्य कस्यचिद्द्वयवस्तुनो[12] धर्मस्य ग्रहेण ग्रहणावेशेन मिथ्याभिनिविष्टतया सुखमाव्रियते[13]ऽनायासेनाऽऽच्छाद्यत इत्यर्थः[14] । द्वयोपलब्धिनिमित्तं हि तत्राऽऽवरणं न यत्नान्तरमपेक्षते । दुःखं च[16] विव्रियते[17] प्रकटी क्रियते । परमार्थज्ञानस्य दुर्लभत्वात् । भगवानसावात्माऽद्वयो देव इत्यर्थः । अतो वेदान्तैराचार्यैश्च बहुश उच्यमानोऽपि नैव ज्ञातुं शक्यत इत्यर्थः । "आश्चर्यो वक्ता कुशलोऽस्य लब्धा" इति श्रुतेः ॥ ८२ ॥

---

१ क. च. छ. धातुः स्व° । घ. धातुं स्व° । २ झ. पुनः की° । ३ क. च. छ. धातुः स्व° । ४ ख. °भावे व° । ५ घ. °स्य साधा° । ६ ख. ग. घ. ङ. ज. झ. च नि° । ७ ङ. छ. °षुप्त्यादौ । ८ ख. °त्मत्वप्रस° । ९ क. °त्येकप° । १० झ. °पि बहुशः प° । ११ च. °त्त्वं यस्मा° । १२ च. °चिद्वस्तु° । १३ घ. °माद्रिय° । १४ क. °र्थः । अद्व° । १५ ख. घ. ङ. ज. तत्त्वाव° । १६ च. च व्रि° । ज. च वव्रि° । १७ झ. °ते द्वितीयाद्वै भयं भवतीति श्रुतेः । प° । १८ च. °मानेऽपि । १९ च. झ. °क्यत इ° । २० घ. लब्ध इति ।

आत्मा चेदुक्तलक्षणो विवक्षितस्तर्हि किमित्यसौ श्रुत्याचार्योपदिष्टस्तथैव सर्वैर्न गृह्यते तत्राऽऽहं—**सुखमिति**। मिथ्याभिनिवेशादात्मतत्त्वस्वरूपसुखं सदैवाऽऽच्छाद्यते तस्मादेव वस्तुतोऽसदपि दुःखं सर्वदा प्रकटी क्रियते तेनासौ भगवानात्मा श्रुत्याचार्योपदिष्टोऽपि न विस्पष्टो भवतीत्यर्थः। श्लो[1]कव्यावर्[2]त्यां शङ्कां दर्शयति—**एवमिति**। स्वयंज्योतिष्ट्वादिप्रागुपदिष्टप्रकारेणेति याव[3]त्। तत्र श्लोकमवतार्य व्याकरोति—**उच्यत इत्यादिना**। द्वैते गृह्यमाणेऽपि कथमात्मस्वरूपस्य सुखस्[4]वरूपस्यानायासेनाऽऽच्छाद्यमानत्वं तत्राऽऽह—**द्वयेति**। इतश्चाऽऽत्मतत्त्वं यथावन्न प्रतिभातीत्याह—**दुःखं चेति**। यथावदात्मप्र[5]थाभावे हेतुमाह—**परमार्थेति**। देवो याथातथ्येन न भातीति शेषः। सुखस्य विद्यमानस्याऽऽवरणमविद्यमानस्य दुःखस्य विवरणमिति स्थिते फलितमाह—**अत इति**। श्रुत्याचार्योपदेशस्य तात्पर्यशून्यत्वं वारय[6]ति—**बहुश इति**। आत्मनि प्रवचनस्[7]य परिज्ञानस्[8]य दुर्लभत्वे प्रमाणमाह—**आश्चर्य इति**॥ ८२॥

**अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः।**
**चलस्थिरोभयाभावैरावृणोत्येव बालिशः॥ ८३॥**

**अस्ति नास्तीत्यादिसूक्ष्मविषया अपि पण्डितानां ग्रहा भगवतः परमात्मन आवरणा एव किमुत मूढजनानां बुद्धिलक्षणा इत्येवमर्थं प्रदर्शयन्नाह—अ[9]स्तीति। अ[10]स्त्यात्मेति वादी कश्चित्प्रतिपद्यते। नास्तीत्यपरो वैनाशिकः। अस्ति नास्तीत्यपरोऽर्धवैनाशिकः। सदसद्वादी दिग्वासाः। नास्ति नास्तीत्यत्यन्तशून्यवादी। तत्रास्तिभावश्चलः, घटाद्यनित्यविलक्षणत्वात्। नास्तिभावः स्थिरः सदावि[11]शेषत्वात्। उभ[12]यं चलस्थिरविषयत्वा[13]त्सदसद्भावोऽभावोऽत्य[14]न्ताभावः। प्रकारचतुष्टयस्यापि तैरेतैश्चलस्थिरोभयाभावैः स[15]दसदादिवादी सर्वोऽपि भगवन्तमावृणोत्येव बालिशोऽविवेकी। यद्यपि पण्डितो बालिश एव परमार्थतत्त्वानवबोधात्किमु स्वभावमूढो जन इत्यभिप्रायः॥ ८३॥**

परीक्षकाभिनिवेशानामप्यात्मावरणत्वे सति लौकिकपुरुषाभिनिवेशानां तदावरणत्वं किमु वक्तव्यमिति साधयति—**अस्तीत्यादिना**। श्लोकस्य तात्पर्यमाह—**अस्तीति**।

---

१ ग. झ. °कस्य व्यावर्त्याश°। २ छ. °वर्त्याभाश°। ३ झ. °त्। श्रुत्याचार्योपदेशस्य तात्पर्यशून्यत्वं वारयति। बहुश इति। त°। ४ ग. छ. झ. °स्वस्या°। ५ ख. ज. °प्रत्ययाभा°। ६ झ. °ति। आ°। ७ ख. °स्य दु°। ८ ग. छ. झ. °स्य च दु°। ९ ख. झ. अस्त्यात्मेति। १० च. अस्ति ह्यात्मे°। ११ झ. °विषयत्वा°। १२ च. °भयच°। १३ घ. °त्वात्सद्भा°। १४ च. °त्यन्तः प्र°। १५ च. सदासद्वादी सदसद्वादी असदसद्वादी।

प्रमाता देहादिव्यतिरिक्तोऽस्तीत्याद्यो वैशेषिकादिपक्षः। देहादिव्यतिरिक्तोऽपि नासौ बुद्धेर्व्यतिरिच्यते क्षणिकस्य विज्ञानस्यैवाऽऽत्मत्वादिति द्वितीयो विज्ञानवादिपक्षः। तृतीयो दिगम्बरपक्षः। चतुर्थे[2] तु शून्यवादिपक्षे शून्यस्याऽऽत्यन्तिकत्वद्योतनार्था वीप्सा। द्वितीयार्धं विभजते—**तत्रेत्यादिना**। अनित्येभ्यो घटादिभ्यः सुखाद्याकारपरिणामितया वैलक्षण्यादस्तिभावो योऽयं प्रमातोक्तः स चलः सविशेषः सन्परिणामीत्यर्थः। देहाद्यतिरिक्तोऽपि प्रमाता बुद्ध्यतिरिक्तो नास्तीति यो नास्तिभावः स स्थिरो निर्विशेषत्वात्[6]तदभावस्येत्याह—**नास्तिभाव इति**। प्रकारचतुष्टयस्यास्तित्वस्य नास्तित्वस्यास्तिनास्तित्वस्य नास्तिनास्तित्वस्य चेति यावत्। बालिशत्वे सिद्धे फलितं न्यायमुपसंहरति—**किम्विति** ॥ ८३ ॥

**कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदाऽऽवृतः।**
**भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥ ८४ ॥**

कीदृक्पुनः परमार्थतत्त्वं यदवबोधादबालिशः पण्डितो भवतीत्याह—कोट्यः प्रावादुकशास्त्रनिर्णयान्ता एता उक्ता अस्ति नास्तीत्याद्याश्चतस्रो यासां कोटीनां ग्रहैर्ग्रहणैरुपलब्धिनिश्चयैः सदा सर्वदाऽऽवृत आच्छादितस्तेषामेव प्रावादुकानां यः[10] स भगवानाभिरस्तिनास्तीत्यादिकोटिभिश्चतसृभिर्[11]प्यस्पृष्टोऽस्त्यादि[12]विकल्पनावर्जित इत्येतत्। येन मुनिना दृष्टो ज्ञातो वेदान्ते[13]ष्वौपनिषदैः[14] पुरुषः स सर्वदृक्सर्वज्ञः परमार्थपण्डित इत्यर्थः ॥ ८४ ॥

आत्मनो यदावरणमुक्तं तदुपसंहरति—**कोट्य इति**। यासां कोटीनां परीक्षकपरिकल्पितनिर्णयनिरूपणीयानां ग्रहैरभिनिवेशविशेषैरात्मा सदा समावृत[15]स्ताः खल्वेताश्चतस्रः कोट्यः सन्ति। तथा[16] चाऽऽत्मनो न यथावदात्मप्रथनमित्यर्थः। यदि सदाऽऽत्मा समावृतो न तर्हि तस्य ज्ञानं ज्ञाने वा नास्ति नैराकाङ्क्ष्यं ज्ञातव्यान्तरपरिशेषादित्याशङ्क्याऽऽह—**भगवानिति**। आत्मा हि वस्तुतोऽस्तीत्यादिकल्पनारहितो येनोपनिषत्प्रवणेन प्रतिपन्नः स[19] सर्वज्ञो ज्ञातव्यान्तरमपश्यन्परमार्थपण्डितो निराकाङ्क्षो भवतीत्यर्थः। श्लोकनिरस्यामाकाङ्क्षां दर्शयति—**कीदृगिति**। किमिति परमार्थतत्त्वं

---

१ घ. ङ. ज. °वादप°। २ क. °र्थे शू°। ३ घ. ङ. °नार्थवी°। ४ ग. झ. °णामत°। ५ ग. छ. °हाद्यति°। ६ झ. °शेषात°। ७ च. °श्च तत्परायास्तु ग्रहैस्तासां। ८ घ. °ताश्च ग्र°। ९ च. तत्परायास्तासां। १० ख. यः पुनः स। ११ क. °रस्पृ°। १२ ख. घ. ङ. °दिक°। १३ च. °दान्तदृष्टौप°। १४ च. °दः स। १५ घ. °तस्ताश्च। १६ घ. °थाऽऽत्म°। १७ ख. °वत्प्रथ°। १८ क. °नाहि°। १९ ग. सर्वे°।

जिज्ञास्यते, तज्ज्ञानात्पाण्डित्यसिद्ध्यर्थमित्याह—यदवबोधादिति । तत्र श्लोकमव-तार्य व्याकरोति—आहेत्यादिना । तेषामत्र प्रावादुकानामुपलब्धिनिश्चयैरिति संबन्धः । यो भगवानुक्तविशेषणः स येनेति योजना ॥ ८४ ॥

प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम् ।[1]
अनापन्नादिमध्यान्तं किमतः परमीहते ॥ ८५ ॥

प्राप्यैतां यथोक्तां कृत्स्नां समस्तां सर्वज्ञतां ब्राह्मण्यं पदं स ब्राह्मणः । "एष नित्यो महिमा ब्राह्मणस्य" इति श्रुतेः । आदिमध्यान्ता उत्पत्तिस्थितिलया अनापन्ना अप्राप्ता यस्याद्वयस्य पदस्य न विद्यन्ते तदनापन्नादिमध्यान्तं ब्राह्मण्यं पदम् । तदेव प्राप्य लब्ध्वा किमतः परमस्मादात्मलाभादूर्ध्वमीहते चेष्टते निष्प्रयोजनमित्यर्थः । "नैव तस्य कृतेनार्थः" इत्यादिस्मृतेः ॥ ८५ ॥

ज्ञानवतोऽपि यावज्जीवादिश्रुतिवशादग्निहोत्रादि कर्तव्यमित्याशङ्क्याऽऽह—प्राप्येति । यथोक्तां चतुष्कोटिविनिर्मुक्तामिति यावत् । समस्तत्वं ज्ञातव्यशेषशून्यत्वं परिपूर्णज्ञप्तिरूपत्वम् । तत्र ब्राह्मण्यपदप्रयोगे प्रमाणमाह—स ब्राह्मण इति । स विद्वानपरोक्षीकृतब्रह्मतत्त्वः सन्फलावस्थो मुख्यो ब्राह्मणो भवतीत्यर्थः । ब्राह्मणस्य ब्रह्मविदो विद्याफलावस्थस्यैव स्वभावो महिमेत्युक्तो निर्विकारो वृद्धिह्रासाभावादेक-रूपो भवतीति वाक्यान्तरस्यार्थः । तदेव पदं विशिनष्टि—अनापन्नादिमध्यान्त-मिति । तद्व्याकरोति—आदीति । अन्वयं दर्शयन्नवशिष्टं व्याचष्टे-तदेव प्राप्येति । ज्ञानवान्फलावस्थः सन्कृतकृत्यो न तस्य किंचिदस्ति कर्तव्यमित्यस्मिन्नर्थे भगवद्वाक्यं प्रमाणयति—नैव तस्येति ॥ ८५ ॥

विप्राणां विनयो ह्येष शमः प्राकृत उच्यते ।
दमः प्रकृतिदान्तत्वादेवं विद्वाञ्शमं व्रजेत् ॥ ८६ ॥

विप्राणां ब्राह्मणानां विनयो विनीतत्वं स्वाभाविकं यदेतदात्मस्व-रूपेणावस्थानम् । एष विनयः शमोऽप्येष एव[2] प्राकृतः स्वाभाविकोऽ-कृतक उच्यते । दमोऽप्येष एव प्रकृतिदान्तत्वात्स्वभावत एव चोपशा-न्त[3]रूपत्वा[4]द्ब्रह्मणः । एवं यथोक्तं स्वभावोपशान्तं ब्रह्म विद्वाञ्शममुप-शान्तिं स्वाभाविकीं ब्रह्मस्वरूपां व्रजेद्ब्रह्म[5]स्वरूपेणावतिष्ठत इत्यर्थः ॥ ८६ ॥

---

१ घ. °प्प्रमागमि° । २ च. °व स्वमतस्थापनं विना परमतखडनं न संभवति । परमतो त्पाटनं विना स्वमतस्थापनं न संभवतीति प्र° । ३ छ. °न्तस्वरू°। ४ छ. °त्वाद्ब्राह्म° । ५ घ. °ह्मरू°।

यावज्जीवादिश्रुतेरविद्वद्विषयत्वाद्विदुषो नाग्निहोत्रादि कर्तव्यमित्युक्तम् । इदानीं तस्यापि नियोगतोऽस्ति कर्तव्यमित्याशङ्क्याऽऽह—विप्राणामिति । ब्रह्मविदां ब्राह्मणानामेष विनयः स्वभावतो[1] न नियोगाधीनां कर्तव्यतामधिकरोति । शमोऽपि स्वाभाविको न नियोगेन क्रियते दमोऽपि स्वभावसिद्धत्वान्न नियोगमपेक्षते। एवं कूटस्थमात्मतत्त्वं विद्वा[2]नुमानशेषविक्रियाशू[3]न्यब्रह्मस्वरूपेण तिष्ठतीत्यर्थः । अक्षरार्थं कथयति—विप्राणा[4]मित्यादिना । तमेव स्वाभाविकं विनयं विवृणोति—यदेतदिति । एष एवेत्यात्मस्वभावो गृह्यते ॥ ८६ ॥

**सवस्तु सोपलम्भं च द्वयं लौकिकमिष्यते ।**
**अवस्तु सोपलम्भं च शुद्धं लौकिकमिष्यते ॥ ८७ ॥**

एवमन्योन्यविरुद्धत्वात्संसारकारणानि रागद्वेषदोषास्पदानि प्रावादुकानां दर्शनानि। अतो मिथ्यादर्शनानि तानीति तै[5]र्युक्तिभिरेव दर्शयित्वा चतुष्कोटिवर्जितत्वाद्रागादिदोषानास्पदं स्वभावशान्तमद्वैतदर्शनमेव सम्यग्दर्शनमित्युपसंहृतम् । अथे[6]दानीं स्वप्रक्रियाप्रदर्शना[7]र्थ आरम्भः—सवस्तु संवृ[8]त्ति । सता वस्तुना सह वर्तत इति सवस्तु । तथा चोपलब्धिरुपलम्भस्तेन सह वर्तत इति सोपलम्भं च शास्त्रादिसर्वव्यवहारास्पदं ग्राह्यग्राहकलक्षणं द्वयं लौकिकं लोकादनपेतं लौकिकं जागरितमित्येतत् । एवंलक्षणं जागरितमिष्यते वेदान्तेषु । अवस्तु संवृ[9]तेरप्यभावात् । सोपल[10]म्भं वस्तु[11]वदुपलम्भनमुपलम्भोऽसत्यपि वस्तुनि तेन सह वर्तत इति सोपलम्भं च। शुद्धं केवलं [12]प्रविभक्तं जागरितात्स्थूलाल्लौकिकं सर्वप्राणिसाधारणत्वादिष्यते स्वप्न इत्यर्थः ॥ ८७ ॥

परमतनिराकरणमुखेनाऽऽत्मतत्त्वमवधारितम् । अधुना स्वप्रक्रिययाऽवस्थ[13]त्रयोपन्यासमुखेनापि तदवधारयितुमवस्थाद्वयमुपन्यस्यति—सवस्त्विति । वृत्तानुवादपूर्वकं प्रकरणशे[14]षस्य तात्पर्यं[15] दर्शयति—एवमिति । शिष्यस्याध्यारोपदृष्टिमाश्रित्य जाग्रदादिपदार्थपरिशुद्धिपूर्वको बोधप्रकारः स्वप्रक्रिया तया तस्यैवाऽऽत्मतत्त्वस्य प्रदर्शनपरो ग्रन्थशेष इत्यर्थः । [16]तत्र जागरितमुदाहरति—सवस्त्विति । यद्धि प्रातिभासिकं व्याव-

---

१ च. °भावोऽतो । २ छ. °द्वान° । ३ ग. °शून्येन ब्र° । ४ ख. °णामिति त° । ५ घ. ङ. ज. तत्तयु° । ६ च. °दानीमस्वप्राक्रियप्र° । ७ छ. °नार्थमार° । ८ क. °वृतिः । स° । घ. च. °वृत्तिसत्ताव° । ङ. °वृत्तिस° । ९ क. घ. °वृतेर° । १० घ. °लम्भव° । ११ च. °स्तुत उप° । १२ क. प्रतिविविक्तं । ङ. छ. प्रविविक्तं । १३ झ. °स्थाद्वयो° । १४ ग. झ. °षता° । १५ छ. °र्यं कथय° । १६ घ. तच्च जा° । झ. तच्चाग° ।

हारिकं च स्थूलमर्थजातमादित्यादिदेवतानुगृहीतैरिन्द्रियैरुपलभ्यते तज्जागरितमित्यर्थः । द्वयमित्यस्यार्थमाह—**शास्त्रादीति** । तत्र श्लोके लोकप्रसिद्धमित्येतदुच्यते—**लौकिकमिति** । तद्व्याचष्टे—**लोकादिति** । न केवलमिदं जागरितं लोकप्रसिद्धम् । किं तु वेदान्तेष्वपि परम्परया ज्ञानोपायत्वेन प्रसिद्धमित्याह—**एवंलक्षणमिति** । स्वप्नोपन्यासपरमुत्तरार्धं योजयति—**अवस्त्विति** । बाह्येन्द्रियप्रयुक्तो व्यवहारः संवृत्तिशब्दार्थः सोऽपि स्थूलार्थवन्न स्वप्ने संभवति । तथा च बाह्येषु करणेषूपसंहृतेषु जागरितवासनानुसारेण मनसस्तदर्थाभासाकारावभासनं स्वप्नशब्दितमित्यर्थः । शुद्धमित्यस्य केवलमिति पर्यायं गृहीत्वा विवक्षितमर्थमाह—**प्रविभक्तमिति**[1] । तस्यापि लोकप्रसिद्धत्वं लौकिकमित्यनेनोक्तं तद्विवृणोति—**सर्वप्राणीति** ॥ ८७ ॥

**अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम् ।**
**ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितम् ॥ ८८ ॥**

अवस्त्वनुपलम्भं च ग्राह्यग्रहण[3]वर्जितमित्येतल्लोकोत्तरम् । अत एव लोकातीतम् । ग्राह्यग्रहणविषयो हि लोक[4]स्तदभावात्सर्वप्रवृत्तिबीजं सुषुप्तमित्येतदेवं स्मृतं सोपायं परमार्थतत्त्वं लौकिकम् । शुद्धलौ[5]किकं लोकोत्तरं[6] क्रमेण येन ज्ञानेन[7] ज्ञायते तज्ज्ञानं ज्ञेयमेतान्येव त्रीणि[8] । एतद्व्यतिरेकेण ज्ञेयानुपपत्तेः । सर्वप्रावादुककल्पितवस्तुनोऽत्रैवान्तर्भावाद्विज्ञेयं परमार्थसत्त्वं[9] तुर्याख्यमद्वयमजमात्मतत्त्वमित्यर्थः । सदा सर्वदैतल्लौकिकादि[10]विज्ञेयान्तं बुद्धैः[11] परमार्थदर्शिभिर्ब्रह्मविद्भिः प्रकीर्तितम् ॥ ८८ ॥

संप्रति सुषुप्तं[12] दर्शयति—**अवस्त्विति** । स्थूलं सूक्ष्मं च वस्तु विषयभूतं यत्र[13] न विद्यते तत्तथा । इन्द्रियार्थसंप्रयोगजन्यो वा स्थूलार्थावगाही[14] वासनात्मको वा[15] यत्रोपलम्भो न संभवति तदशेषविशेषविज्ञानशून्यं सुषुप्तमिति विशिनष्टि—**अनुपलम्भं चेति** । नन्विदं[16] कारणात्मना बुद्धेरवस्थानम्[17] । न च कारणं लोके प्रसिद्धम् । कार्यस्यैवावस्थाद्वयात्मकस्य तथात्वादित्यभिप्रेत्याऽऽह—**लोकोत्तरमिति** । तस्य साक्षिप्रसिद्धत्वं विवक्षित्वाऽऽह[18]—**इति स्मृतमिति** । ज्ञानज्ञेया[19]मकावस्थात्रयं तुरीयं च परमार्थ-

---

१ झ. °कारत्वभा° । २ क. ङ. छ. ज. प्रविविक्तमिति । ३ छ. °ह्यग्राहकव° । ४ ख. लोको लोकाभा° । ५ क. छ. शुद्धं लौ° । ६ च. °रं च जाग्रदादिक्र° । ७ ख. ज्ञाय° । ८ छ. त्रीण्येव त° । ९ घ. °सत्त्वं तु° । च. °सत्यतु° । १० ज. °कावि° । ११ च. °ज्ञेयं तद्बुद्धैः । १२ छ. सुषुप्तिं । १३ झ. यत्र वि° । १४ ग. °लार्थवि° । १५ झ. वाऽत्र सोप° । १६ ख. छ. तच्चेदं । ग. नत्विदं । १७ ग. °स्थाद्व° । १८ क. °क्तमित्याह—स्मृ° । १९ ग. झ. ज्ञानेन ज्ञे° ।

तत्त्वं विद्वदनुभवसमधिगम्यमित्याह—ज्ञानमिति। श्लोकगतं पदद्वयमनूद्य विवक्षितमर्थं कथयति—अवस्त्विति। ग्राह्यग्रहणविभागवर्जितत्वादेव कुतो लोकातीतत्वमित्याशङ्क्याऽऽह—ग्राह्येति। सुषुप्तं चेदं लौकिकं कथं तदवगम्यतामित्याशङ्क्याऽऽह—सर्वप्रवृत्तीति। अवस्थाद्वयबीजं सुषुप्तमित्येतत्प्रसिद्धं शास्त्रविदामित्याह—एवमिति। अवस्थात्रयमेवमुक्त्वा ज्ञानपदार्थं कथयति—सोपायमिति। ज्ञानमत्र मनोवृत्तिरूपं विवक्षितमवस्थात्रयातिरिक्तमपि परीक्षकपरिकल्पितं ज्ञेयं संभवतीत्याशङ्क्याऽऽह—सर्वेति। सर्वैरेव प्रावादुकैः शुष्कतर्कजल्पनशीलैः परिकल्पितस्य कार्यकारणादिरूपवस्तुनोऽवस्थात्रये नियमेनान्तर्भावाज्ज्ञेयान्तरं नास्तीत्यर्थः। ज्ञेयमेव विशेषेण ज्ञेयं विज्ञेयमुच्यते तेन तदपि नावस्थात्रयातिरिक्तमस्तीत्याशङ्क्याऽऽह—विज्ञेयमिति। उपायोपेयभूते यथोक्तेऽर्थे विदुषामभिमतिमादर्शयति—सदेति॥ ८८॥

ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम्।
सर्वज्ञता हि सर्वत्र भवतीह महाधियः॥ ८९॥

ज्ञाने च लौकिकादिविषये। ज्ञेये च लौकिकादौ त्रिविधे। पूर्वं लौकिकं स्थूलम्। तदभावेन पश्चाच्छुद्धं लौकिकम्। तदभावेन लोकोत्तरमित्येवं क्रमेण स्थानत्रयाभावेन परमार्थसत्ये तुर्येऽद्वयेऽजेऽभये विदिते स्वयमेवाऽऽत्मस्वरूपमेव सर्वज्ञता सर्वश्चासौ ज्ञश्च सर्वज्ञस्तद्भावः सर्वज्ञता। इहास्मिँल्लोके भवति महाधियो महाबुद्धेः। सर्वलोकातिशयवस्तुविषयबुद्धित्वादेवंविदः सर्वत्र सर्वदा भवति। सकृद्विदिते स्वरूपे व्यभिचाराभावादित्यर्थः। न हि परमार्थविदो ज्ञानोद्भवाभिभवौ स्तो यथाऽन्येषां प्रावादुकानाम्॥ ८९॥

आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीति श्रुत्या यत्प्रतिज्ञातं तदुक्तवस्तुज्ञाने फलतीति कथयति—ज्ञाने चेति। ज्ञानज्ञेयवेदने विवक्षितं क्रममनुक्रामति—पूर्वमित्यादिना। यत्पुनरवस्थात्रयातीतं तुरीयं तत्परिज्ञाने विवक्षितं क्रमं दर्शयति—स्थानेति। तुर्ये विदिते सतीति संबन्धः। तस्य स्थानत्रयात्मद्वैताभावोपलक्षितत्वमाह—अद्वय इति। जन्मादिसर्वविक्रियारहितत्वेन कौटस्थ्यं कथयति—अज इति। कार्यसंबन्धस्तत्र नास्तीति वक्तुं कारणभूताविद्यासंबन्धाभावमभिदधाति—अभय इति।

---

१ ग. °गविव°। २ ग. घ. ज. °नमात्र°। ३ घ. °जनन°। ४ ग. झ. °लैः क°। ५ ख. ग. छ. झ. °पस्य व°। ६ छ. तेनेदमपि। ७ घ. °ने लौ°। ८ क. झ. °धे च पू°। घ. ङ. °धे सर्व। ९ च. °च्छुद्धलौ°। १० छ. °तं वस्तु त°। ११ ग. झ. °यज्ञाने। १२ घ. ङ. °ति। सर्व°। १३ क. कौटस्थं।

यथोक्ततत्त्वज्ञानस्य परिपूर्णब्रह्मरूपेणावस्थानं[1] फलमाह—स्वयमेवेति। ज्ञानवतो यथोक्तं फलमर्चिरादिमार्गायत्तमिति शङ्कां वारयति—इहेति। उक्तज्ञानवतो महाबुद्धित्वे हेतुमाह[3]—सर्वलोकेति। ज्ञानवतो यथोक्तं ज्ञानं कदाचिद्भवे(वद[4]पि) कालान्तरेऽभिभूतमसत्कल्पं भविष्यतीत्याशङ्क्याऽऽह—एवंविद इति। श्रुत्याचार्यप्रसादाद्विदिते स्वरूपे स्वरूपस्फुरणस्य व्यभिचाराभावात्परिपूर्णज्ञप्तिरूपता विदुषो भवतीत्युक्तं स्फुटयति—न हीति ॥ ८९ ॥

## हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः।
## तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः ॥ ९० ॥

लौकिकादीनां क्रमेण ज्ञेयत्वेन निर्देशादस्तित्वाशङ्का परमार्थतो मा भूदित्याह—हेयानि च लौकिकादीनि त्रीणि जागरितस्वप्नसुषुप्तान्यात्मन्यसत्त्वेन रज्ज्वां सर्पवद्धातव्यानीत्यर्थः। ज्ञेयमिह चतुष्कोटिवर्जितं परमार्थतत्त्वम्। आप्यान्याप्तव्यानि त्यक्तबाह्यैषणात्रयेण भिक्षुणा पाण्डित्यबाल्यमौनाख्यानि साधनानि। पाक्यानि रागद्वेषमोहादयो दोषाः कषायाख्यानि(णि) पक्तव्यानि। सर्वाण्येतानि हेयज्ञेयाप्यपाक्यानि विज्ञेयानि भिक्षुणोपायत्वेनेत्यर्थः। अग्रयाणतः प्रथमतस्तेषां हेयादीनामन्यत्र विज्ञेयात्परमार्थसत्यं विज्ञेयं ब्रह्मैकं वर्जयित्वा। उप[6]लम्भनमु[7]पलम्भोऽविद्याकल्पनामात्रम्[8]। हेयाप्यपाक्येषु त्रिष्वपि स्मृतो ब्रह्मविद्भिर्न परमार्थसत्यता त्रयाणामित्यर्थः ॥ ९० ॥

अवस्थात्रयस्य ज्ञेयत्वनिर्देशात्परमार्थतोऽस्तित्वमाशङ्क्य परिहरति—हेयेति। शङ्कोत्तरत्वेन श्लोकमवतार्य[9] हेयशब्दार्थं व्याचष्टे—लौकिकादीनामिति। तान्येव त्रीणि विभजते—जागरितेति। पाण्डित्यं वेदान्ततात्पर्याभिज्ञत्वमाद्वितीयवस्तुविचार[10]चातुर्यपरिनिष्पन्नं श्रवणम्। बाल्यं दम्भदर्पाहंकारादिराहित्यम्[11], युक्तितः श्रुतार्था[12]नुसंधानकुशलत्वम्। मौनं मुनेः कर्म ज्ञानाभ्यासलक्षणं निदिध्यासनशब्दितम्। तान्येतान्याप्तव्यानि। यद्यपि[13] ज्ञेयस्य विज्ञेयत्वं[14] युक्तं तथाऽपि कथं हेयादीनां विज्ञेयत्वमित्याशङ्क्याऽऽह—उपायत्वेनेति। तदेव प्रकटयितुं प्रथमत इत्युक्तम्। उत्तरार्धं व्याचष्टे—तेषामिति। हेयादीनां रज्जुसर्पवदविद्याकल्पितत्वान्नास्ति परमार्थत्व[15]शङ्केत्यर्थः ॥ ९० ॥

---

१ झ. °र्णरू°। २ छ. °ह्मस्वरू°। ३ ग. झ. °तुफलमा°। ४ क. छ. °वेऽपि का°। ५ छ. °णव्य°। ६ झ. उपाल°। ७ झ. °मुपाल°। ८ ख. घ. ङ. ज. °ल्पनमा°। ९ ग. झ. श्लोकार्थम°। १० ग. °विद्यातु°। ११ छ. दम्भाहं°। १२ घ. ङ. ज. °तानु°। १३ ग. झ. °पि विज्ञे°। १४ छ. °यत्वमुक्तं। १५ ग. झ. °र्थश°।

प्रकृत्याऽऽकाशवज्ज्ञेयाः सर्वे धर्मा अनादयः।
विद्यते न हि नानात्वं तेषां क्वचन किंचन ॥ ९१ ॥

परमार्थतस्तु प्रकृत्या स्वभावत आकाशवदाकाशतुल्याः सूक्ष्मनिरञ्जनसर्वगतत्वैः[2] सर्वे धर्मा आत्मानो[3] ज्ञेया मुमुक्षुभिरनादयो नित्याः। बहुवचनकृतभेदाशङ्कां[4] निराकुर्वन्नाह—क्वचन किंचन किंचिदणुमात्रमपि तेषां न विद्यते नानात्वमिति ॥ ९१ ॥

यदुक्तं ज्ञेयं चतुष्कोटिवर्जितं परमार्थतत्त्वमिति तदिदानीं स्फुटयति—प्रकृत्येति। बहुवचनप्रयोगप्राप्तं दोषं प्रत्यादिशति—विद्यत इति। कल्पितभेदनिबन्धनं बहुवचनमित्यर्थः। क्वचनेति देशकालावस्थाग्रहणम्। अणुमात्रमपीति कार्यकारणभावस्यांशांशिभावस्य चोपादानम् ॥ ९१ ॥

आदिबुद्धाः प्रकृत्यैव सर्वे धर्माः सुनिश्चिताः।
यस्यैवं भवति क्षान्तिः सोऽमृतत्वाय कल्पते ॥ ९२ ॥

ज्ञेयताऽपि धर्माणां संवृत्यैव न परमार्थत इत्याह-यस्मादादौ बुद्धा आदिबुद्धाः प्रकृत्यैव स्वभावत एव यथा नित्यप्रकाशस्वरूपः सवितैवं नित्यबोधस्वरूपा इत्यर्थः[8]। सर्वे[9] धर्माः सर्वे आत्मानः[10]। न च तेषां निश्चयः[11] कर्तव्यो नित्यनिश्चितस्वरूपा इत्यर्थः। न संदिह्यमानस्वरूपा एवं नैवं चेति। यस्य मुमुक्षोरेवं यथोक्तप्रकारेण सर्वदा बोधनिश्चयनिरपेक्षताऽऽत्मार्थं परार्थं वा यथा सविता नित्यं प्रकाशान्तरनिरपेक्षः स्वार्थं परार्थं[12] चेत्येवं भवति क्षान्तिर्बोधकर्तव्यतानिरपेक्षता सर्वदा[13] स्वात्मनि सोऽमृतत्वायामृतभावाय कल्पते। मोक्षाय समर्थो[14] भवतीत्यर्थः ॥ ९२ ॥

ज्ञेयशब्दप्रयोगान्मुख्यमेव ज्ञेयत्वं प्राप्तं[15] प्रत्युदस्यति—आदिबुद्धा इति। यथोक्तरीत्या समुत्पन्नस्य ज्ञानस्य फलमाह—यस्येति। प्रथमपादस्य तात्पर्यमाह-ज्ञेयताऽपीति। उक्तमर्थं दृष्टान्तेन स्पष्टयति—यथेति। पादान्तरस्यार्थं कथयति—न चेति। निश्चितस्वरूपत्वमेव व्यतिरेकद्वारा स्फोरयति—नेत्यादिना। न खल्वात्मा[16]स्वसत्तायामेवं नैवमिति संदिह्यमानस्वरूपो भवितुमलम्। तस्य स्फुरणाव्यभिचारात्तद्रूपत्वस्य[17]

१ छ. °वत्सर्वे ज्ञेया ध°। २ क. °गतत्वे स°। छ. °गत्वे स°। ३ क. च. छ. ज. आत्मनो। ४ घ. °भेदश°। ५ ख. किंचि°। ६ ग. झ. °प्राप्तदो°। ७ झ. बुद्धाः। ८ च. °र्थः। न स°। ९ छ. सर्वध°। १० छ. ज. झ. आत्मनः। ११ छ. निश्चयस्व°। १२ झ. °र्थे वेत्ये°। १३ च. °दाऽऽत्म°। १४ ज. °र्थो न भ°। १५ ज. °प्तं व्युद°। १६ ज. °त्मा स°। १७ क. घ. ज. °पस्य।

प्रागेव साधितत्वादित्यर्थः । द्वितीयार्धं व्याकरोति—यस्येत्यादिना । आत्मस्वरूपस्य स्फुरद्रूपत्वं यथोक्तप्रकारः । बोधाख्यो निश्चयो बोधनिश्चयस्तस्मिन्निरपेक्षत्वं स्वार्थमन्यार्थं वा यस्य भवति सोऽमृतत्वाय कल्पत इति संबन्धः । तदेव दृष्टान्तेन साधयति—यथेत्यादिना । इतिशब्दो यथेत्यनेन संबध्यते ॥ ९२ ॥

**आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः[3] ।**
**सर्वे धर्माः समाभिन्ना अजं साम्यं विशारदम् ॥९३॥**

तथा[4] नापि शान्तिकर्तव्यताऽऽत्मनीत्याह—यस्मादादिशान्ता नित्यमेव शान्ता अनुत्पन्ना अजाश्च प्रकृत्यैव सुनिर्वृताः सुष्ठूपरतस्वभावा इत्यर्थः । सर्वे धर्माः समाश्चाभिन्नाश्च समाभिन्ना अजं साम्यं विशारदं विशुद्धमात्मतत्त्वं यस्मात्तस्माच्छान्तिर्मोक्षो वा नास्ति कर्तव्य इत्यर्थः । न हि नित्यैकस्वभावस्य कृतं किंचिदर्थवत्स्यात् ॥ ९३ ॥

सोऽमृतत्वायेत्यादिवचनादागन्तुकममृतत्वं[6] प्रत्युदस्यति—आदिशान्ता इति । श्लोकस्य तात्पर्यमक्षरार्थं च निर्दिशति—तथा नापीत्यादिना । उक्तमेवार्थं चतुर्थपादेन संक्षिप्य दर्शयति—अजमिति । श्लोकार्थमुपसंहरति—विशुद्धमिति । उक्तरूपतानङ्गीकारे मोक्षस्यापुरुषार्थता स्यादित्याह—न हीति । संसारदुःखोपशमनं सुखजन्म वा यदि क्रियेत तदा कृतकस्यानित्यत्वमवश्यंभावीत्यर्थः ॥ ९३ ॥

**वैशारद्यं तु वै नास्ति भेदे विचरतां सदा ।**
**भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः ॥९४॥**

ये यथोक्तं परमार्थतत्त्वं प्रतिपन्नास्त एवाकृपणा लोके[10] कृपणा[11] एवान्य इत्याह—यस्माद्भेदनिम्ना भेदानुयायिनः संसारानुगा इत्यर्थः । के । पृथग्वादाः पृथङ्नाना वस्त्विवत्येवं[12] वदनं येषां ते पृथग्वादा द्वैतिन इत्यर्थः । तस्मात्ते कृपणाः क्षुद्राः स्मृता यस्माद्वैशारद्यं विशुद्धिर्नास्ति तेषां भेदे विचरतां द्वैतमार्गेऽविद्याकल्पिते सर्वदा वर्तमानानामित्यर्थः । अतो युक्तमेव तेषां कार्पण्यमित्यभिप्रायः ॥ ९४ ॥

इदानीं मुमुक्षुप्ररोचनार्थमविद्वन्निन्दां दर्शयति—वैशारद्यं त्विति । श्लोकस्य तात्पर्यं दर्शयति—ये यथोक्तमिति । उत्तरार्धमादौ योजयति—यस्मादिति ।

---

१ क. °थोक्तं प्र° । २ झ. बोद्धव्यो नि° । ३ ज. °निर्मिताः । ४ च. °थाऽपि न शा° । ५ क. °रस्व° । ६ ग. छ. झ. °त्वं प्राप्तं तत्प्रत्यु° । ७ घ. °रूपान° । ८ ज. झ. सुखं ज° । ९ घ. °श्यं भवतीत्य° । १० च. °के अन्ये कृपणा एवेत्या° । ११ क. °णास्त्वन्य । १२ च. वस्त्वस्तीत्येवं ।

तस्मादित्युत्तरेणास्य संबन्धः । प्रथमार्धमुक्तेऽर्थे हेतुत्वेन व्याचष्टे—यस्मादित्यादिना । समनन्तरोक्तस्य यस्मादित्यस्यापेक्षितं पूरयति—अत इति ॥ ९४ ॥

**अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः ।**
**ते हि लोके महाज्ञानास्तच्च लोको न गाहते ॥९५॥**

यदिदं परमार्थतत्त्वममहात्मभिरपण्डितैर्वेदान्तबहिष्ठैः[1] क्षुद्रैरल्पप्रज्ञैर[2]नवगाह्यमित्याह—अजे साम्ये परमार्थतत्त्व एवमेवेति ये केचित्स्त्र्याद्योऽपि सुनिश्चिता भविष्यन्ति चेत्त[3]र्हि एवं[3] हि लोके महाज्ञा[4]ना निरतिशयतत्त्वविषयज्ञाना इत्यर्थः । त[5]च्च तेषां वर्त्म तेषां विदितं परमार्थतत्त्वं सामान्यबुद्धिरन्यो लोको न गाहते नावतरति न विष[6]यी करोतीत्यर्थः ।

"सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ।
देवा[7] अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः ।
श[8]कुनीनामिवाऽऽकाशे गतिर्नैवो[9][10]पलभ्यते" ॥

इत्यादिस्मरणात् ॥ ९५ ॥

एवमविद्वन्निन्दां प्रदर्श्य विद्वत्प्रशंसां प्रसारयति—**अज इति** । कू[12]टस्थे वस्तुनि निर्विशेषे येषामसंभावनाविपरीतभावनाविरहि निर्धा[13]रणरूपं विज्ञा[14]नं संभावनोपनीतमस्ति ते हि व्यवहारभूमौ महति निरतिशये तत्त्वे परिज्ञा[15]नवत्त्वान्महानुभावा भवन्तीत्यर्थः । ननु तत्त्वविषयज्ञानस्य सर्वलो[16]के साधारणत्वात्तत्त्वज्ञानवतां किमिति प्रशंसा प्रस्तूयते तत्राऽऽह—**तच्चेति** । श्लोकस्य तात्पर्यमाह—**यदिदमिति** । यदित्युपक्रमात्तदमहात्मभिरनवगाह्यमिति योजनीयम् । अमहात्मत्वं क्षुद्रहृदयत्वम् । तत्र हेतुः—**अपण्डितैरिति** । अपाण्डित्यं विवेकरहितत्वम् । तत्र हेतुर्वेदान्तेत्यादिना सूच्यते । तेषां पौर्वापर्येण पर्यालो[17]चनापरिचयपराङ्मुखैरित्यर्थः । विचारच[18]तुर्याभावादेव पदार्थवाक्यार्थविभागावगमशून्यत्वमाह—**अल्पप्रज्ञैरिति** । तर्हि पारमार्थिके तत्त्वे केषा[19]मेव मनीषा समुन्मिषेदित्याशङ्क्य येषां केषांचिदेव तन्निष्ठानामित्याह—**ये केचिदिति** । स्त्र्यादीनामुपनि-

---

१ च. °हिष्कृतैः । क्षु° । २ क. °ल्पज्ञै° । ३ च. °र्त्तर्हि त एव । ४ झ. °व लो° । ५ ज. °ज्ञाननि° । ६ च. तच्चैवरां । ७ घ. °षयं क° । ८ क. °वा मार्गेऽपि मु° । झ. °वापि । ९ क. झ. °ह्यन्ति ह्यप° । १० घ. ङ. ज झ. °कुनाना° । ११ झ. °पपद्यते । १२ ख घ. ङ. °टस्थव° । १३ झ. °रणं रू° । १४ क. छ. °ज्ञानसं° । ज ज्ञाने सं° । झ °ज्ञातत्वसं° । १५ घ. ङ. °ज्ञातव° । १६ ग. झ. °लोकसा° । १७ ग. झ. °चनप° । १८ ग. झ. °चार्यभा° । १९ घ. °मेवं म° ।

षड्द्वारा ज्ञानाधिकाराभावेऽपि द्वारान्तरप्रयुक्तस्तदधिकारः संभवतीत्यभिप्रेत्यापीत्युक्तम् । तत्त्वज्ञानस्य दुर्लभत्वमभ्युपेत्य चेदित्युक्तम् । चतुर्थपादं व्याचष्टे—तच्चेति । ज्ञानवतां विज्ञातं परमार्थतत्त्वमन्येषामनवगाह्यमित्यत्र प्रमाणमाह—सर्वभूतेति । सर्वेषां भूतानां ब्रह्मादीनां स्तम्बपर्यन्तानामात्मा परं ब्रह्म तद्भूतस्य विदुषः सर्वत्राऽऽत्मभूतस्य सर्वेषु भूतेषु निरुपचरितस्वरूपत्वादेव परमहितस्य परमप्रेमास्पदत्वादेव परमसुखात्मकस्य प्राप्यपुरुषार्थविरहिणो मार्गे देवा विद्यावन्तोऽपि पदमन्वेषमाणा विविधं मोहमुपगच्छन्तीत्यर्थः । महात्मनो ज्ञानवतो गन्तव्यपदरहितस्य परिपूर्णस्य गतिरवगन्तुमशक्येति निदर्शनवशेन विशदयति—शकुनीनामिति ॥ ९५ ॥

अजेष्वजमसंक्रान्तं धर्मेषु ज्ञानमिष्यते ।
यतो न क्रमते ज्ञानमसङ्गं तेन कीर्तितम् ॥ ९६ ॥

कथं महाज्ञानत्वमित्याह—अजेष्वनुत्पन्नेष्वचलेषु धर्मेष्वात्मस्वजममचलं च ज्ञानमिष्यते सवितरीवौष्ण्यं प्रकाशश्च यतस्तस्मादसंक्रान्तमर्थान्तरे ज्ञानमजमिष्यते । यस्मान्न क्रमतेऽर्थान्तरे ज्ञानं तेन कारणेनासङ्गं तत्कीर्तितमाकाशकल्पमित्युक्तम् ॥ ९६ ॥

अजं साम्यमित्युक्तं प्रमेयम् । तद्विषयनिश्चयवान्प्रमाता । प्रमाणं तथाविधनिश्चयज्ञानमिति । वस्तुपरिच्छेदे कथं महाज्ञानत्वमित्याशङ्क्याऽऽह—अजेष्विति । अजा धर्माश्रितप्रतिबिम्बा जीवा विवक्ष्यन्ते । तेष्वजं ज्ञानं कूटस्थदृष्टिरूपं बिम्बकल्पं ब्रह्माचलमात्मभूतमभ्युपगम्यते । तथा च मानमेयादिभावस्य कल्पितत्वेऽपि वस्तुतो वस्तुपरिच्छेदाभावादुपपन्नं तज्ज्ञानवतां महाज्ञानत्वमित्यर्थः । किं चास्मन्मते ज्ञानस्य यदसङ्गत्वमङ्गीकृतं तदपि विषयाभावादेव सिध्यति । ततश्च मुक्त्यै निर्विषयं मन इति यदुच्यते तदप्यविरुद्धमित्याह—यतो नेति । आकाङ्क्षापूर्वकं पूर्वार्धं योजयति—कथमित्यादिना । उत्तरार्धं व्याचष्टे—यस्मान्नेति । नित्यविज्ञप्तिरूपस्याऽऽत्मनोऽसङ्गत्वं प्रागपि सूचितमित्याह—आकाशेति ॥ ९६ ॥

अणुमात्रेऽपि वैधर्म्ये जायमानेऽविपश्चितः ।
असङ्गता सदा नास्ति किमुताऽऽवरणच्युतिः ॥ ९७ ॥

---

१ छ. 'नाभा' । २ ख. घ. ङ. ज. सर्वभूतात्म' । छ. सर्वात्म' । ३ ग. 'तरू' । ४ ग. झ. 'परप्रे' । ५ घ. ङ. ज. झ. शकुनानामिति । ६ च. 'थं तेषां महाज्ञानवत्त्वमित्यत आह । ७ झ. 'लं ज्ञा' । ८ च. 'न्न संक्र' । ९ घ. ङ. ज. 'मिति ह्युक्त' । १० घ. ज. 'धज्ञा' । ११ ग. तत्प्रज्ञाव' । १२ छ. 'नवत्त्वमि' । १३ क. 'षयभा' । १४ ग. झ. मुक्तोनिर्वि' । १५ ज. 'प्तिस्वरू' ।

इतोऽन्येषां वादिनामणुमात्रेऽल्पेऽपि वैधर्म्ये वस्तुनि बहिरन्तर्वा जायमान उत्पाद्यमानेऽविपश्चितोऽविवेकिनोऽसङ्गताऽसङ्गत्वं सदा नास्ति किमुत वक्तव्यमावरणच्युतिर्बन्धनाशो नास्तीति ॥ ९७ ॥

कूटस्थं ब्रह्मैव तत्त्वमिति स्वमते ज्ञानमसङ्गं सिध्यतीत्युक्तम् । मतान्तरे पुनः सविषयत्वाज्ज्ञानस्यासङ्गत्वमसंगतं प्रसज्येतेत्याह—अणुमात्रेऽपीति । अविद्वद्दृष्ट्या कस्यचिदपि पदार्थस्य जन्माङ्गीकारे ज्ञानस्य तदनुषङ्गित्वेनासङ्गत्वायोगे बन्धध्वंसलक्षणं प्रयोजनं दूरापास्तं भवतीत्याह—किमुतेति । श्लोकाक्षराणि व्याकरोति—इत इति । विद्वानद्वैतवादी पञ्चम्या परामृश्यते ॥ ९७ ॥

अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः ।
आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः ॥ ९८ ॥

तेषामावरणच्युतिर्नास्तीति ब्रुवतां स्वसिद्धान्तेऽभ्युपगतं तर्हि धर्माणामावरणम् । नेत्युच्यते । अलब्धावरणाः । अलब्धमप्राप्तमावरणमविद्यादिबन्धनं येषां ते धर्मा अलब्धावरणा बन्धनरहिता इत्यर्थः । प्रकृतिनिर्मलाः स्वभावशुद्धा आदौ बुद्धास्तथा मुक्ता यस्मान्नित्यशुद्धबुद्धमुक्तस्वभावाः । यद्येवं कथं तर्हि बुध्यन्त इत्युच्यते । नायकाः स्वामिनः समर्था बोद्धुं बोधशक्तिमत्स्वभावा इत्यर्थः । यथा नित्यप्रकाशस्वरूपोऽपि सविता प्रकाशत इत्युच्यते यथा वा नित्यनिवृत्तगतयोऽपि नित्यमेव शैलास्तिष्ठन्तीत्युच्यते तद्वत् ॥ ९८ ॥

न चेदावरणच्युतिरिष्यते तर्हि स्वीकृतमावरणमित्याशङ्क्याऽऽह—अलब्धेति । बोद्धृत्वं तर्हि कथमित्याशङ्क्य बोधनशक्तिमत्त्वादित्याह—बुध्यन्त इति । शङ्कोत्तरत्वे श्लोकमवतारयति—तेषामित्यादिना । अविद्वद्दृष्ट्यैवाविद्यावरणं सिध्यति न तत्त्वदृष्ट्येत्यभिप्रेत्य व्याचष्टे—अलब्धेति । उक्तेऽर्थे हेतुकथनार्थं विशेषणत्रयमित्याह—यस्मादिति । तस्माद्बन्धनराहिता इति पूर्वेण संबन्धः । आत्मनो यथोक्तस्वभावत्वे बोद्धृत्वं न सिध्यतीत्याक्षिपति—यद्येवमिति । पादान्तरेणोत्तरमाह—उच्यत इति । मुख्यावेव क्रियाकर्तारौ प्रकृतिप्रत्ययाभ्यामभिधेयावित्याशङ्क्य नियममुदाहरणाभ्यां निरस्यति—यथेत्यादिना ॥ ९८ ॥

---

१ ख. घ. ङ. ज. °षां तु वा° । २ ख. °ङ्गत्वं । ३ झ. °त्वं ना° । ४ क. छ. किमु । ५ च. °ति ॥ ९७ ॥ अलब्धावरणाः । ६ क. °नः स्ववि° । ७ झ. °गेऽत्वं दू° । ८ ख. °क्षणप्र° । ९ घ. °णतेत्यु° । १० ज. °रणब° । ११ घ. °त्यबु° । १२ झ. बोध° । १३ च. °श इ° । १४ ख. छ. झ. °त्युच्यन्ते त° । १५ ग. झ. शङ्कान्तरं । १६ क. बाधत्वं । १७ झ. °वेत्रक्रि° ।

क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तापि(यि)नः ।
सर्वे धर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥ ९९ ॥

यस्मान्न हि क्रमते बुद्धस्य परमार्थदर्शिनो ज्ञानं विषयान्तरेषु[2] धर्मेषु धर्मसंस्थं सवितरीव[1] प्रभा । तापि(यि)नः, तापो(यो)ऽस्यास्तीति तापी(यी)[3],संतानवतो[4] निरन्तरस्याऽऽकाशकल्पस्येत्यर्थः । पूजावतो वा प्रज्ञावतो वा सर्वे धर्मा आत्मानो[5]ऽपि तथा ज्ञानवदेवाऽऽकाशकल्पत्वान्न क्रमन्ते क्वचिदप्यर्थान्तर[6] इत्यर्थः । यदादावुपन्यस्तं ज्ञानेनाऽऽकाशकल्पे-नेत्यादि तदिदमाकाशकल्पस्य तापि(यि)नो बुद्धस्य तदनन्यत्वादाकाश-कल्पं ज्ञानं न क्रमते क्वचिदप्यर्थान्तरे। तथा धर्मा इति। आकाशमिवाचलम-विक्रियं निरवयवं नित्यमद्वितीयमसङ्गमदृश्यमग्राह्यमशनायाद्यतीतं[7] ब्रह्मा-त्मतत्त्वम्। "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतेः। ज्ञानज्ञेयज्ञातृभे-दरहितं परमार्थतत्त्वमद्वयमेतन्न[8] बुद्धेन भाषितम्[9]। यद्यपि बाह्यार्थनिराक-रणं[10] ज्ञानमात्र[11]कल्पना चाद्वयवस्तुसामीप्यमुक्तम् । इदं तु परमार्थतत्त्व-मद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः ॥ ९९ ॥

किमिति मुख्ये बौद्धत्वे संभाविते तदेव नेष्टमित्याशङ्क्य ज्ञानस्य विद्वद्दृष्ट्या विष-यसंबन्धा[12]संभवादित्याह—क्रमत इति । किं च जीवानां ब्रह्मात्मना विभुत्वादाकाशव-त्क्रियासमवायायोगान्न मुख्यं बौद्धत्वं सेद्धुमलमित्याह—सर्वे इति । ज्ञानमात्रं पारमा-र्थिकं तत्रैव[13] ज्ञातृज्ञेयादि कल्पितमिति सौगतमतमेव[14] भवताऽपि संगृहीतमित्याश-ङ्क्याऽऽह—ज्ञानमिति । तत्र पूर्वार्धाक्षराणि व्याकरोति—यस्मादिति । यद्धि पर-मार्थदर्शिनो ज्ञानं तन्न विषयान्तरेषु क्रमते किं तु सवितरि प्रकाशवदात्मन्येव प्रतिष्ठितं यस्मादिष्यते तस्मान्नास्मिन्मुख्यं[15] बौद्धत्वं सेद्धुमर्हतीत्यर्थः । परमार्थदर्शिनो[16] विशेषणम्—तापि(यि)न इति। तद्व्याचष्टे—तापो(यो)ऽस्येत्यादिना[17] । आत्मनो मुख्यस्य[18] बौद्धत्व-स्याभावे हेत्वन्तरम्—सर्वे[19] धर्मास्तथेति । तद्विभजते—सर्व इत्यादिना । प्रकरणादावुक्त-मेव किमर्थं पुनरिहोच्यते तत्राऽऽह—यदादाविति । तदिदमिहोपसंहृतमिति शेषः । क्रमते न हीत्यादेरक्षरार्थमुपसंहरति—आकाशकल्पस्येति । सर्वे धर्मास्तथेत्यस्यार्थं निगमयति—तथेति । धर्मा न क्रमन्ते क्वचिदपीति शेषः । तथा च नाऽऽत्मनि मुख्यं

१ च. °तरि प्र° । २ छ. °पो यस्या° । ३ क. छ. °पी तस्य सं° ४ क. च. °तापव° । ५ क. ग. च. ज. आत्मनोऽ° । ६ झ. °र्थान्त इ° । ७ छ. °ममद° । ८ छ. °न्न भाषितं बुद्धेन य° । ९ च. भावितम् । १० च. °रणज्ञा° । ११ च. °मात्रं क° । १२ ग. झ. °न्धाभावा° । १३ ग. झ. तदेव । १४ ज. °तमेव । १५ क. °न्मुख्यत्वं । १६ ज. °मात्मद° । १७ छ. °पो यस्ये° । १८ ग. झ. °ख्यबो° । १९ ङ. सर्वध° ।

बोद्धृत्वं किं त्वौपचारिकमिति प्रकृतमुपसंहर्तुमिति शेषः । पूर्वार्धस्य तात्पर्यमाह—आकाशमिति । ज्ञानमित्यादि व्याचष्टे—ज्ञानेति । सकलभेदविकलं परिपूर्णमनादिनिधनं ज्ञप्तिमात्रमुपनिषदेकसमधिगम्यं तत्त्वमिह प्रतिपाद्यते । मतान्तरे तु नैवमिति कुतो मतसांकर्याशङ्काऽवकाशमासादयेदित्यर्थः ॥ ९९ ॥

## दुर्दर्शमतिगम्भीरमजं साम्यं विशारदम् ।
## बुद्ध्वा पदमनानात्वं नमस्कुर्मो यथाबलम् ॥१००॥

## इति गौडपादाचार्यकृता माण्डूक्योपनिषत्कारिकाः संपूर्णाः ॥ ॐ तत्सत् ॥

**शास्त्रसमाप्तौ परमार्थतत्त्वस्तुत्यर्थं नमस्कार उच्यते । दुर्दर्शं दुःखेन दर्शनमस्येति दुर्दर्शम् । अस्ति नास्तीति चतुष्कोटिवर्जितत्वाद्दुर्विज्ञेयमित्यर्थः । अत एवातिगम्भीरं दुष्प्रवेशं महासमुद्रवदकृतप्रज्ञैः । अजं साम्यं विशारदम् । ईदृक्पदमनानात्वं नानात्ववर्जितं बुद्ध्वाऽवगम्यं तद्भूताः सन्तो नमस्कुर्मस्तस्मै पदाय । अव्यवहार्यमपि व्यवहारगोचरमापाद्य यथाबलं यथाशक्तीत्यर्थः ॥ १०० ॥**

प्रकरणचतुष्टयविशिष्टस्य शास्त्रस्याऽऽद्यावन्तेऽपि परदेवतातत्त्वमनुस्मरंस्तन्नमस्काररूपं मङ्गलाचरणं संपादयति—दुर्दर्शमिति । दुर्विज्ञेयत्वे प्रत्यक्षादिप्रमाणानधिगम्यत्वं हेतुं विवक्षित्वा विशिनष्टि—अतिगम्भीरमिति । प्रत्यक्षादिभिरनवगाह्यत्वे कूटस्थत्वं निर्विशेषत्वं सर्वसंबन्धविधुरत्वं चेति हेतुत्रयमभिप्रेत्याऽऽह—अजमित्यादिना । विशेषणत्रयं तर्हि कुतश्चिदनवगतं तन्नास्त्येवेति निश्चेतुं युक्तम्, प्रमाणाधीनत्वात्प्रमेयसिद्धेरित्याशङ्क्योपनिषद्भिरतद्धर्माध्यासापाकरणद्वारेणावगम्यमानत्वान्नैवमित्याह—पदमिति । तत्र तर्हि सकलविभागविकले कुतो नमस्कारक्रिया स्वीक्रियामर्हतीत्याशङ्क्याऽऽह—अनानात्वमिति । यद्यपि वस्तुतस्तस्मिन्नानात्वं नावकल्प्यते तथाऽपि यथासामर्थ्यं मायाबलमवलम्ब्य काल्पनिकं नानात्वमनुसृत्य नमस्कारक्रिया प्रचयादिप्रयोजनवती प्रामाणिकैरभिप्रेतेत्यर्थः । श्लोकस्य तात्पर्यमाह—शास्त्रेति । यदि परमार्थतत्त्वं शास्त्रस्याऽऽद्यावन्तेऽपि नमस्क्रियते तदा तस्याऽऽद्यन्तमध्येष्वनुसंधेयतया

---

१ क. °पकारि । २ ग. झ. °शब्दप्रयोगः । पू° । ३ घ. ङ. °त्पर्यार्थमा° । ४ घ. °शकल्पस्येति । ५ ख. ग. झ. °नं विज्ञप्ति° । ६ ख. घ. ङ. °पदैक° । ७ च. °त्यर्थन° । ८ च. °स्तीत्यादिच° । ९ झ. °दुर्दर्शं° । १० झ. °म्य ज्ञात्वा त° । ११ ख. छ. °रतामा° । १२ घ. ङ. ज. °दि वि° । १३ छ. °गतत्वान्ना° । १४ झ. °माधी° । १५ ख. घ. ङ. ज. सर्ववि° । १६ ख. °स्तुतोऽस्मि° । १७ क. °नुस्मृत्य । १८ घ. ङ. ज. शास्त्रादा° ।

स्तुतिः[1] सिध्यति । तेन तदर्थमादाविवावसानेऽपि प्रह्वीभाव[2]स्तद्विषय[3]श्लोकेनोपदिश्यते । तथा च प्रतिपाद्यस्य ब्रह्मणो महामहिमत्वं[4] समधिगतमित्यर्थः । दुर्दर्शत्वमुक्तं व्यनक्ति—**अस्तीति** । सर्वेषामेव यथोक्ते[5] परमार्थतत्त्वे प्रवेशानुपपत्तिमाशङ्क्य संप्रदायरहितानां तथात्वेऽपि तद्वतां मैवमित्याह—**अकृतेति** । कौटस्थ्यादिसिद्ध्यर्थं व्याख्यातमेव पदत्रयमनुवदति—**अजमिति** । उक्तं वेदान्तैकगम्यं तत्त्वं द्वैताभावोपलक्षितमित्याह—**ईदृगिति** । यथोक्तं ब्रह्म ज्ञात्वा ज्ञानसामर्थ्याद्ब्रह्मीभूतश्चेदाचार्यस्तर्हि कथं तस्मै नमस्कर्तुं प्रवर्तते । न हि परिपूर्णं[6] वस्तु वस्तुतो व्यवहारगोचरतामाचरतीत्याशङ्क्याऽऽह—**अव्यवहार्यमिति** । परमार्थतो व्यवहारा[7]गोचरत्वेऽपि परमार्थतत्त्वस्य मायाशक्तिमनुसृत्य व्यवहारगोचरतां[8] परिकल्प्य नमस्कारक्रिया तस्मिन्प्रयोजनवशादाश्रितेत्यर्थः ॥ १०० ॥

अजमपि जनियोगं[9] प्रापदैश्वर्ययोगा-
दगति च गतिमत्तां प्रापदेकं ह्यनेकम् ।
विविधविषयधर्मग्राहिमुग्धेक्षणानां
प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि[10] ॥ १ ॥

इदानीं भाष्यकारोऽपि भाष्यपरिसमाप्तौ शास्त्रप्रतिपादित[11]परदेवता[12]तत्त्वमनुस्मृत्य[13] तन्नमस्काररूपं मङ्गलाचरणमाचरति—**अजमपीति** । यद्ब्रह्माशेषोपनिषत्प्रसिद्धं सर्वथा परिच्छेदरहितं तदहं प्रत्यग्भूतं नमस्ये(नतोऽस्मि) तद्विषयं प्रह्वीभावं[14] करोमीति संबन्धः । प्रणामप्रयोजनमाह—**प्रणतेति** । ये हि प्रणता ब्रह्मणि प्रकटीभूतास्तन्निष्ठास्तिष्ठन्ति तेषां यदविद्यातत्कार्यात्मकं भयं तदाचार्योपदेशजनितबुद्धिवृत्तिफलकारूढं ब्रह्मैव हन्ति । न खलु जडो बुद्धिवृत्तिर्वस्तुसामर्थ्यमन्तरेणाज्ञानं[16] सकार्यमपनेतुमलम् । बुद्धीद्धो बोधो बोधेद्धो[17] वा बुद्धिरुक्तं[18] फलमादधातीत्यर्थः । तस्यैव ब्रह्मणः संप्रति तटस्थलक्षणं विवक्षति[19]—**अजमित्यादिना** । यद्यपि जन्मादिसर्वविक्रिया[20]शून्यं वस्तुतो ब्रह्म कूटस्थमास्थीयते तथाऽपि तदैश्वर्येण तदीयशक्त्यात्मकेनानिर्वाच्याज्ञानवैभवेन योगादाकाशादिकार्यात्मना जन्मसंबन्धं प्राप्य जगतो निदानमिति व्यपदेशभाग्भवति तथा च श्रुतिसूत्रयोर्ब्रह्मणो[21] जगत्कारणत्वं प्रसिद्धमित्यर्थः । यद्यपि चेदं ब्रह्म कूटस्थतया विभुतया

---

१ क. श्रुतिः । २ क. प्रकटीभा° । ३ ख. °षयः श्लो° । ४ ग. घ. °हित्वं । ५ ख. घ. ङ. ज. °थोक्तप° । ६ ज. °पूर्णव° । ७ घ. ङ. ज. °रमा° । ८ क. °हारगो° । ९ च. °योग्यप्रा° । १० छ. °न्नमस्ये ॥ १ ॥ ११ घ. °दितं दे° । १२ ङ. °तात्वम° । १३ ग. छ. झ. °नुसृत्य । १४ क. प्रकटीभा° । १५ क. °द्धा वृ° । १६ क. °नं स्वका° । १७ क. °द्धा बु° । १८ ख. ज. झ. °रुक्तफ° । १९ झ. °क्षते । अ° । २० ग. छ. झ. °वीक्रि° । २१ घ. च. °ह्मणः कार° ।

च गतिवर्जितमवतिष्ठते[1] तथाऽपि यथोक्ताज्ञानमाहात्म्यात्कार्यब्रह्मतां प्राप्य गतिमत्तां[2] गन्तव्यतां बादर्यधिकरणन्यायेन प्रतिपद्यते तदाह—अगति चेति। यद्यपि चेदं ब्रह्म वस्तुतो निरस्तसमस्तनानात्वमेकरसमद्वितीयमुपनिषद्भिरभ्युपगम्यते तथाऽपि[3] जीवो जगदीश्वरश्चेत्यतद्यदनाद्यनिर्वाच्याविद्यावशादनेकमिव प्रतिभातीत्याह—एकमिति। केषां दृष्ट्या पुनरनेकत्वं ब्रह्मणोऽवगम्यते[4] तदाह—विविधेति। विविधाश्च ते विषयधर्माश्च तद्ग्राहितया मुग्धं विपर्यस्तं विवेकविकलमीक्षणं[5] येषां तेषां दृष्ट्या ब्रह्मणोऽनेकत्वधीर्न तु तत्त्वतः। शान्तदृष्ट्या[6] तु तस्मिन्नेकत्वमेव प्रामाणिकमित्यर्थः॥ १॥

प्रज्ञावैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं
भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे।
कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभं भूतहेतो-
र्यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि॥ २॥

संप्रति ग्रन्थप्रणयनप्रयोजनप्रदर्शनपूर्वकं परमगुरू[7]नागमशास्त्रस्य व्याख्यातस्य प्रणेतृत्वेन व्यवस्थितान्प्रणमति—प्रज्ञेति। यो हि कारुण्यादिदं ज्ञानाख्यममृतं भूतहेतोस्तदुपकारार्थमुद्दधार तं परमगुरुं नतोऽस्मीति संबन्धः। अमुमिति तस्य पुरोदेशे[8] संनिहितत्वेनापरोक्षत्वं सूचितम्[9]। परमगुरुत्वं पूज्यानामपि गुरूणामतिशयेन[10] पूज्यत्वा[11]दाचार्यस्य समधिगतमित्याह—पूज्येति। नमस्कारप्रक्रियां प्रकटयति[12]—पादपातैरिति। पादौ तदीयौ[13] पादौ तयोः[14] स्वकीयस्योत्तमाङ्गस्य पातौ[15] भूयो भूयो नम्रीभावास्तैरिति यावत्। आचार्यो ज्ञानाख्यममृतं कथंभूतमुद्धृतवानित्यपेक्षायामुक्तम्—अन्तरस्थमिति। कस्यान्तरस्थमिति विवक्षायामाह—वेदेति। कथमित्यत्राऽऽह—प्रज्ञेति। मेधासहिता प्रज्ञैव वैशाखो मन्था[16]स्तस्य वेधो वेधनं क्षेपणं तेन क्षुभितो विलोडितो जलनिधिर्वेदनामा तस्यान्तरेऽभ्यन्तरे स्थितमिदममृतमिति यावत्। उक्तस्य ज्ञानामृतस्य प्रसिद्धादमृतादवान्तरवैषम्यमादर्शयति—अमरैरिति। यद्धि भगवता नारायणेन क्षीरसागरान्तरावस्थितममृतं समुद्धृतं तदेव कथंचिदमरा लेभिरे। इदं तु तैरनायासलभ्यं न भवति। ज्ञानसामग्रीसंपन्नैरेव लभ्यत्वादित्यर्थः। यदि कारुण्यादिदममृतमाचार्येण वेदोदधेर्भूतोपकारार्थमुद्धृतं कथं तर्हि कारुण्यं तस्य प्रादुरभूदित्याशङ्कयाऽऽह—भूतानीति। योऽयं समुद्रवद्दुरुत्तारः संसारस्तस्मिन्नविरतमनवरतं संत-

---

१ क. °ष्ठति त°। २ छ. °मतां ग°। ३ ग. °था जी°। ४ ख. °णोराग°। ५ ग. झ. °विकल°। ६ ख. ङ. छ. ज. शास्त्रदृ°। घ. शास्त्रतो दृ°। ७ घ. °गुरुगम्यशा°। ८ घ. ङ. ज. °शे च सं°। ९ ज. सूचयति। १० ङ. °शयत्वेन। ११ ङ. पूज्याचा°। १२ ङ. प्रकथयति। १३ ख. °यौ त°। १४ ख. °कीयोत्त°। १५ ग. झ. °ता भूयो न°। १६ ख. मन्थस्त°।

तमेव यानि जननानि विग्रहभेदग्रहणानि तान्येव ग्राहा जलचरास्तैर्घोरे क्रूरे भयंकरे मग्नानि भग्नसंकल्पानि परवशानि भूतान्युपलभ्य कारुण्यमाचार्यस्य प्रादुरासीत् । तत-श्चेदममृतमुद्धृत्य भूतेभ्यो दत्त्वा तानि रक्षितवानित्यर्थः ॥ २ ॥

यत्प्रज्ञालोकभासा प्रतिहतिमगमत्स्वान्तमोहान्धकारो
मज्जोन्मज्जच्च घोरे ह्यसकृदुपजनोदन्वति त्रासने मे ।
यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरग्र्या ह्यमोघा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये ॥ ३ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजका-
चार्यस्य श्रीशंकरभगवतः कृतौ गौडपादीयागमशास्त्र-
विवरणेऽलातशान्त्याख्यं चतुर्थप्रकरणं
समाप्तम् ॥ ४ ॥

ॐ तत्सत् ।

अथाधुना स्वगुरुभक्तेर्विद्याप्राप्तावन्तरङ्गत्वमङ्गीकृत्य तदीयपादसरसीरुहयुगलं प्रण-मति—यत्प्रज्ञेति । तेषामस्मद्गुरूणां पादौ सर्वभावैर्वाङ्मनोदेहानां प्रह्वीभावैर्नमस्ये नम्री भवामीति संबन्धः । तौ च जगतः सर्वस्यापि पावनीयौ पवित्रतया पवित्रत्वमा-पाद्य निर्वृणाते तौ च स्वसंबन्धिनां सर्वेषां भवः संसारस्तत्प्रयुक्तं भयं स्वकारणेन सहापनुद्य पुरुषार्थपरिसमाप्तिं कुर्वाते । तानेव गुरून्विशिनष्टि—यत्प्रज्ञेति । मे मम स्वान्तमन्तःकरणं तस्मिन्मोहो व्याकुलताहेतुरविवेकस्तस्य कारणं यदनाद्यज्ञानं तद्येषां प्रज्ञैवाऽऽलोकस्तस्य भा दीप्तिस्तया प्रतिहतिं विनाशमगमद्गतवत्तत्पादाविति संबन्धः । न केवलमज्ञानमेवाऽऽचार्यप्रसादादपगच्छत्तुच्छी भवति किं तु तत्कार्यमनर्थजातमपि कार-णनिवृत्तौ स्थितिमलभमानमाभासी भवतीत्याह—मज्जोन्मज्जदिति । असकृदनेकशो देवतिर्यगादियोनिषु योऽयमुपजनो नानाविधदेहभेदसंग्रहोऽसावेवोदन्वानुदधिस्तस्मिन्न-तित्रासने भयावहे कदाचिद्यथोक्तमज्ञानं कार्यरूपेण मज्जदनभिव्यक्तमवतिष्ठते तदेव चावस्थाविशेषे तद्रूपेणोन्मज्जदभिव्यक्तमनर्थकरं परिवर्तते । तदेवमतिक्रूरे संसारसागरे परिवर्तमानमज्ञानं सकार्यमाचार्यप्रसादादपनीतमासीदित्यर्थः । न केवलमेकस्य ममैव यथोक्तफलप्राप्तिराचार्यप्रसादादाविरभूत्किं तु तच्चरणपरिचर्यापरायणानामन्येषामपि भूय-

---

१ ग. छ. झ. °रादयस्तै°, २ छ. विमग्नानि । ३ घ. °न्तमौहा° । ४ ख. ङ. ज झ °न्मजं(ज्जं) श्च घो° । ५ ग. झ. अधुना । ६ क प्रवटीभा° । ७ घ. ङ ज. °तः स्वस्या° । ८ ग. झ. °मापद्य । ९ घ. ज. °पाद्येते नि° । १० ख निर्वृण्वाते । ११ क कुर्वन्नेता° । १२ ख. छ. °व स्वगु° । १३ घ. °म तत्स्वान्त° । १४ घ. ज. तदेशां । १५ छ. प्रह° । १६ ख. °तिं ना° । १७ ज. °त्रासेन भ° । १८ फ. °विषये त° । १९ क. °नं स्वका° ।

सामित्याह—यत्पादाविति। येषां गुरूणां पादद्वयमाश्रितानामन्येषामपि शिष्याणां तदीयशुश्रूषाप्रणयिमनीषाजुषां श्रुतिर्मनननिदिध्यासनसहकृतं श्रवणज्ञानम्। शमः शान्तिरिन्द्रियोपरतिः। विनयोऽवनतिरनौद्धत्यं तेषां प्राप्तिरग्र्या श्रेष्ठा प्रतिष्ठिता सिध्यति। यस्मादमोघा सफला श्रवणादीनां प्राप्तिस्तस्मादग्र्यत्वं तस्यां संभाव्यते तदेवमाचार्यप्रसादादात्मनोऽन्येषां च बहूनां पुरुषार्थे परिसमाप्तिसंभवादाचार्यपरिचरणं पुरुषार्थकामैराचरणीयमित्यर्थः॥ ३॥

विष्णुं कृष्णं स्वमायाविरचितविविधद्वैतवर्गं निसर्गा-
दुद्यातानर्थसार्थं निरवधिमधुरं सच्चिदेकस्वभावम्।
आज्ञायाऽऽत्मानमेकं विधिमुखविमुखं नेति नेतीति गीतं
वन्दे वाचां धियां चापरमपि जगतामास्पदं कल्पितानाम्॥ १॥
गौडपादीयभाष्यस्य व्याख्या व्याख्यातृसंमता।
संमिता निर्मिता सेयमर्पिता पुरुषोत्तमे॥ २॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां गौडपादीयभाष्यटीकायामलातशान्त्याख्यं चतुर्थं प्रकरणम्॥ ४॥

ॐ तत्सत्।

## समाप्तेयमानन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता सगौडपादीयकारिकाथर्ववेदीयमाण्डूक्योपनिषत्।

---

१ क. °णमय°। ख. णयिनां म°। ग. झ. °णयनभ°। ज. °णयिनीम°। २ ग. तस्या भा°। ३ क. घ. ज. °षार्थप°। ४ घ. छ. झ. °दुद्धाता°। ख. ङ. °दुत्खाता°।

# शंकरानन्दभगवत्कृता माण्डूक्योपनिषद्दीपिका ।

माण्डूक्योपनिषद्व्याख्यां करिष्ये पदचारिणीम् ।
ओमात्माभेदसंबोधादानन्दात्मप्रकाशनीम् ॥ १ ॥

नामनामिनोर्लोके भेदस्याप्रसिद्धत्वाद्वस्तुतश्चोंकारस्य ब्रह्मविवर्तत्वाद्विवर्तानां च विवर्ताधिष्ठानेन भेदशून्यत्वादत ओंकारं ब्रह्मनामधेयं ब्रह्मदृष्ट्याऽऽह—**ओम्** । अवति ब्रह्मबुद्ध्या दृष्टो द्रष्टूनित्योम् । इति, ओंकारानुकरणार्थः । **एतत्** । उक्तमोंकाररूपं जगत्पर्णस्य शङ्कुस्थानीयं ब्रह्मणा तादात्म्यं प्राप्तं ब्रह्मणो विकारो नामधेयं च । **अक्षरम्** । वर्णात्मकम् । **इदं** विविधप्रत्ययगम्यं चेतनाचेतनात्मकं जगत्**सर्वं** निखिलं **तस्य** सर्वात्मकस्योंकारस्**योपव्याख्यान**मुप सामीप्येन विस्पष्टमा समन्तात्कथनमुक्तार्थविवरणमित्यर्थः । **भूत**मतीतं **भवद्**वर्तमानं **भविष्य**दनागत**मिति**अनेन प्रकारेण **सर्वं** निखिल**मोंकार एव** प्रणव एव न त्वन्यत् । **यच्च** यदपि प्रसिद्धं सदसदात्मक**मन्य**दुक्ताद्व्यतिरिक्तं **त्रिकालातीत**मुक्तकालत्रयासंसृष्टं **तदप्युक्तं** ब्रह्म नरविषाणादिकमपि । अपिशब्दः पूर्वेण समुच्चयमाह । **ओंकार एव** । व्याख्यातम् । ओंकारस्य ब्रह्मणो नामधेयत्वादिसंव्याप्तिरित्यभिप्रायेणाऽऽह—**सर्वं** निखिलं **हि** निश्चित**मेतत्**प्रपञ्चजातं **ब्रह्म** सत्यज्ञानादिलक्षणं बृहत् । जडस्यैव ब्रह्मात्मत्वमुक्तं न चेतनस्येतिशङ्कानिराकरणार्थमाह—**अयम**नुभूयमान **आत्मा**ऽस्मत्प्रत्ययालम्बनश्चेतनस्त्वंपदार्थः । **ब्रह्मो**क्तं तत्पदार्थः । **स** कार्यकारणभावमन्तरेण ब्रह्मणा तादात्म्यं प्राप्तोऽ**यमात्मा** व्याख्यातम् । **चतुष्पा**च्चत्वारः पादा यस्य स चतुष्पात् ।

गौरिव किं चतुष्पादित्याशङ्क्य नेत्याह—**जागरितस्थानो** जागरितं स्थानं यस्य स जागरितस्थानः । ***बहिःप्रज्ञो** बही रूपादौ चक्षुरादिग्राह्ये प्रज्ञा यस्य स बहिःप्रज्ञः **सप्ताङ्गः** सप्तसंख्याकानि द्युसूर्यवाय्वाकाशरयिपृथिव्याहवनीयाख्यानि मूर्धचक्षुःप्राणशरीरान्तर्भागमूत्राशयपादास्यान्यङ्गानि यस्य स सप्ताङ्गः । **एकोनविंशतिमुखः,** पञ्चज्ञानकर्मेन्द्रियप्राणान्तःकरणचतुष्टयरूपाणि मुखान्येकोनविंशतिसंख्याकानि यस्य स एकोनविंशतिमुखः । **स्थूलभुक्,** स्थूलं रूपादिकं भुङ्क्ते इति स्थूलभुक् । **वैश्वानरो** विश्वेषामयं नरो विश्वे वा नरा यस्य विश्वश्चासौ नरश्चेति[वा] विश्वानरः, स एव वैश्वा-

---

* अत्र नित्यं समासेऽनुत्तरपदस्थस्येतिषत्वाभावस्तु च्छन्दसि दृष्टानुविधेराश्रयणात् ।

---

१ ग. °दृष्टयेत्याह । २ ग. °सं भवति । ओंत्र° । ३ ग. °संस्पृष्टं । ४ ग. °ह—शरीरान्तर्भागं स° । ५ ग. °शवारिष्टं° ।

नरः । अथ वा विश्वेषां नरशब्दवाच्यानां चतुर्विधानां स्थूलानां देहानामधिष्ठात **वैश्वानरः प्रथमः पादः** । आत्मनोऽयं सर्वैः सुकरावगमत्वात्प्रथमोंऽशः ।

इदानीं द्वितीयं पादमाह—**स्वप्नस्थानः** स्वप्नं जागरितवासनाजन्यं स्थानं य स स्वप्नस्थानः । **अन्तःप्रज्ञो**ऽन्तर्मानसवासनाविलासे प्रज्ञा बुद्धिर्यस्य सोऽन्तःप्रज्ञः **सप्ताङ्ग एकोनविंशतिमुखः** । व्याख्यातम् । **प्रविविक्तभुक्**प्रविविक्तं सूक्ष्मं भुङ्क्ते इ प्रविविक्तभुक् । **तैजस**स्तेजोऽन्तःकरणं कर्तृकरणकार्यादिभावेन परिणतं तदेव स्थूलश रीरादिहीनं यस्य स तैजसः । अन्तःकरणस्य स्वामीत्यर्थः । जागरितानन्तरभावित्वात् **द्वितीयः पादः** । स्पष्टम् ।

इदानीं तृतीयं पादं वक्तुमाह—**यत्र** यस्मिन्काले **सुप्त** उपरतेन्द्रियग्रामो **कंचन कामं कामयते** कमपि पुण्यपापहेतुभूतं पुत्रक्षेत्रादिकं नाभिलषति । **न कंच स्वप्नं पश्यति** कमपि शुभमशुभं वासनाविलासं नावलोकयति **तत्का**माकामनस्वप्नानव लोकनरूपं **सुषुप्तं** गाढनिद्राप्राप्तिस्थानम् । **सुषुप्तस्थानः** । सुषुप्तं स्वयं श्रुत्या व्या ख्यातं स्थानं यस्य स सुषुप्तस्थानः । **एकीभूतः** सर्वजगद्बीजभूतस्याऽऽवरणात्मकस्या ज्ञानस्यानुपरमादनेकोऽप्यन्तःकरणविक्षेपोपरमादेकतां गतः **प्रज्ञानघन एव** प्रज्ञानमा त्मनो रूपं ब्रह्मणा भेदरहितं स्वयंप्रकाशं तस्य घनः पिण्ड इव स एव न त्वन्तःकर णादिबाह्यं च । न च निरानन्द इत्याह—**आनन्दमयो** विक्षेपाणामुपरमादावरणस्या- नुवृत्तेश्च स्वरूपानन्दप्रचुरो हि यस्मात्तस्मा**दानन्दभुगा**नन्दो विक्षेपाभावोपलक्षित आत्मा तमेव भुङ्क्तेऽज्ञानवृत्तिभिरवगच्छतीत्यानन्दभुक् । **चेतोमुख**श्चेत आत्मस्वरूप- बोधः स एवाऽऽवरणशक्तिसहितो मुखं यस्य स चेतोमुखः । **प्राज्ञः** प्रकृष्टे स्वयंप्र काश आनन्दात्मनि साज्ञाने ज्ञप्तिरज्ञानवृत्तिरूपो बोधो यस्य स प्रज्ञः प्रज्ञ ए प्राज्ञः । उक्तावस्थाद्वयाभावेनावगम्यमानत्वात् । **तृतीयः पादः** । स्पष्टम् । इदानीं प्राज्ञं प्रस्तौति सर्वकारणत्वात्तस्य । **एष** उक्तः प्राज्ञः **सर्वेश्वरः** सर्वनियामक **एष प्राज्ञः सर्वज्ञः** सर्वश्चासौ ज्ञश्चेति सर्वकार्यात्मकत्वादज्ञानस्य वा जानातीति सर्वज्ञः **एष प्राज्ञो**ऽन्त**र्या**म्यन्तर्यमयिता । **एष** प्राज्ञो **योनिः** कारणं **सर्वस्य** निखिल चेतनाचेतनात्मकस्य जगतः । योनित्वे हेतुमाह—**प्रभवाप्यया**वुत्पत्तिविनाशौ यस्माद्**भूतानां** चेतनाचेतनरूपाणामितो भवत इति शेषः ।

इदानीं तुरीयं पादमाह—**नान्तःप्रज्ञं** न मानसवासनाविलासदर्शनलालसं **न ब प्रज्ञं** नेन्द्रियैर्विषयावलोकनपरं **नोभयतःप्रज्ञं** जागरणस्वप्नान्तरालावस्थावबोधशून्य **प्रज्ञानघनं** न ज्ञानमात्रबोधं **न प्रज्ञं** निर्विकल्पबोधशून्यं **नाप्रज्ञं** न बोधाभावरूप **अदृष्टं** प्रत्यक्षादिप्रमाणैरनवलोकितम् । **अव्यवहार्यं** वचनादानादिव्यवहार

ग्राह्यं सर्वप्रकारग्रहणायोग्यम् । अलक्षणं गन्धवत्त्वादिबोधशून्यम् । करणवृत्त्यविषयभूतम् । अव्यपदेश्यं पृथिवीत्यादिव्यपदेशवद्व्यपदेशा- त्मप्रत्ययसारं सर्वाद्वैतप्रत्ययः सारभूतोऽवगतिहेतुत्वेन यस्मिंस्तदेका- ाब्मनसातीतमप्यात्मबोधेनावगन्तुं शक्यमित्यर्थः । प्रपञ्चोपशमं प्रप- रणात्मकस्योपशमोऽभावो यस्मिंस्तत्प्रपञ्चोपशमम् । [ शान्तं स्पष्टम् । ] ाशमानन्दात्मस्वरूपत्वान्मङ्गलम् । अद्वैतमानन्दात्मव्यतिरिक्तशून्यं चतुर्थं न्यन्ते संख्याशून्यमपि पूर्वापेक्षयाऽवगच्छन्ति स वस्तुतस्त्वतुरीयरूपोऽप्य- पादात्माऽऽनन्दात्माऽस्मत्प्रत्ययव्यवहारयोग्यः स तुरीयरूपोऽपगतस- विज्ञेयो विशेषेण साक्षात्कर्तव्यः ।

ात्मोंकारयोरभेदं कण्ठत आह—सोऽयमात्मा व्याख्यातम् । अध्यक्षर- रोकारमकारार्धमात्राख्यानि स्वपादसंमितान्यधिकृत्य वर्तत इत्यध्यक्षरम् । ोंकारस्वरूप ओंकारस्याऽऽत्मस्वरूपत्वे साम्यम् । अधिमात्रमकाराद्याश्च- विश्वादिपादसमसंख्याका अधिकृत्याधिमात्रम् । आत्मोंकारयोरभेदे कार- पादा विश्वतैजसप्राज्ञतुरीयाख्या मात्रा अकारोकारमकारार्धमात्राः । दृढीकर्तुमुक्तं विपर्ययेण निर्दिशति—मात्राश्च पादाः । चकार एवकारार्थः। पर्ययनिर्देशस्त्वमहामितिवदुपचारार्थः किं तु घटः कलशः कलशो घट इतिवद्वि- ं मात्राणां पादानां च तादात्म्यमित्येवकारार्थः । व्याख्यातमन्यत् । अर्धमात्रा- यपादरूपत्वात्तुरीयस्य च पूर्वपादत्रयादत्यन्तवैलक्षण्यादतोऽर्धमात्रां परित्यज्य आह—अकार उकारो मकारः, स्पष्टम् । इति मात्रात्रयनिर्देशार्थः । विभागेन मात्राणां पादरूपतामाह—जागरितस्थानो वैश्वानरोऽकारः ात्रा । पूर्वा मात्रा । व्याख्यातमन्यत् । अकारस्य पूर्वमात्रात्व उपपत्ति- ाप्तेर्व्याप्तेः । अकारो हि जागरितस्थानादिकं सर्वमाप्नोति । प्रकारान्तरेण पुन- ाह—आदिमत्त्वाद्वा । अ आ इ इत्येवमादिरादिः स यस्मिन्नस्ति सोऽय- स्तस्य भाव आदिमत्त्वमादिसामान्यवत्त्वमित्यर्थः । प्रथमपादोऽपि यथा पादा- पञ्च तत्सामान्यवानाप्नोति चेतरत्पादजातं पूर्वभावित्वात् । वाशब्दः पक्षान्- एको रैक्यमाप्तेर्वाऽऽदिमत्त्वाद्वेत्यर्थः । इदानीं विश्वाकारयोरात्म(प्त- विश्वे ाह—आप्नोति । प्राप्नोति ह प्रसिद्धान्वै स्मर्यमाणान्सर्वान्- ान्पुत्रक्षेत्रादीन् । आप्तेः फलमुक्त्वाऽऽदिमत्त्वस्य फलमाह- कार्येषु प्रथमगण्यः । चकारादपि प्रथमं फलं भ- ह—यः पादमात्रातादात्म्यज्ञ एवमुक्तेन प्रक-

१ क ख. °भेदका° । २ ग. °शे-

सामान्यं वेद जानाति स आप्नोतीत्यन्वयः । **स्वप्नस्थानस्तैजस** **मात्रा** । स्पष्टम् । तैजसोकारयोस्तादात्म्ये हेतुमाह—**उत्कर्षादुभ** त्वात् । पुनरन्यत्सामान्यमाह—**उभयत्वाद्वा** विश्वाकाराभ्यां तैजस त्वात् । वाशब्दः पूर्ववत् । इदानीमुक्तज्ञानस्य फलमाह—**उत** **ज्ञानसंततिं** शिष्यप्रशिष्यादिज्ञानसंतत्योत्कृष्टो भवति । व्याख्यातमन्य ज्ञानस्य फलमाह—**समानश्च भवति,** यो हि स्वावस्थानदेशे काले मानः । चकारात्तस्मादुत्कृष्टोऽपि भवति । इदानीमुभयज्ञानस्य साधारण **नास्याब्रह्मवित्कुले भवति** । अस्योत्कर्षोभयत्वज्ञानवतः कुलेऽन्वये दिरूपेऽहं ब्रह्मास्मीत्येतज्ज्ञानशून्यो न भवति । **य एवं वेद,** व्याख्या **स्थानः प्राज्ञो मकारस्तृतीया मात्रा,** स्पष्टम् । प्राज्ञमकारयोस्तादात्म्ये **मितेर्मिनोति** हि प्राज्ञः सर्वमात्मनि तादात्म्येन मकारोऽप्यकारोकारौ प्रा स्वरूपेऽन्यथोंकारस्यानिष्पत्तेः । **अपीतेर्वा** मकारो ह्योंकारे वर्तमानः स ततः प्रलयः प्राज्ञश्च प्रलयः प्रसिद्धः प्रलयसामान्यात् । वाशब्दः पू मितिज्ञात(न)स्य फलमाह—**मिनोति ह वा इदं सर्वम्।** इदं विविधप्रत्य न्निखिलं प्रस्थमिव यावत्, मिनोति सर्वात्मभावेन स्वात्मनि प्रक्षिपति नस्य फलमाह—**अपीतिश्च भवति,** सर्वाधिक्येन प्रलयः सर्वस्य, चकार शून्यश्च भवति । **य एवं वेद,** व्याख्यातम् । अर्धमात्राया अवयव वयविनश्चाभेदमुररीकृत्य चतुर्थपादरूपनिरञ्जनात्मस्वरूपतामोंकारस्याऽऽ त्रोऽकारादिमात्राशून्यश्चतुर्थोऽव्यवहार्यः **प्रपञ्चोपशमः शिवोऽद्वैतः,** **एवमुक्तेन** मात्रातादात्म्येनोंकार **आत्मैव,** स्पष्टम् । **संविशति** सम्यक् **त्यात्मनोंकारेणाऽऽत्मानम**ानन्दात्मस्वरूपं **य** ओंकारात्मज्ञ एवमुक्तेन प्र त्मनोस्तादात्म्यं **वेद** जानाति तस्योक्तोंकाररूपानन्दात्मप्राप्तिफलमर्थसिद्धं नोक्तम् । अथ वा संविशत्यात्मनाऽऽत्मानमितीदं फलवाक्यमस्तु ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंक न्दभगवतः कृतौ माण्डूक्योपनिषद्दीपिका समाप्ता ॥